अथ खल्वर्जुनो गणकमहामात्र इमे गाथेऽभाषत — L 151

कोटीशतं च अयुता नयुतास्तथैव R 172
नियुतानु कङ्करगती तथ बिम्बराश्च ।
अक्षोभिणी परमशानु न मेऽस्त्यतोऽर्थ
मतं उत्तरे गणनमप्रतिमस्य ज्ञानम् ॥ २३ ॥ 5

अपि च भो शाक्या —

त्रिसाहस्रि रजाश्रयन्तका तृणवेन ओषधियो जलस्य बिन्दून् ।
इकारेण न्यसेय एकिलेवो को पुनि निस्मयु पञ्चभि शतेभि ॥ २४ ॥

तत्र देवमनुजा शतसहस्राणि हाहाकारकिलिकिलाप्रक्ष्वेडितेशतसहस्राणि प्रामुञ्चन् । गगनतलगताश्च देवपुत्रा इमा गाथा अभाषन्त — 10

यावन्त सत्त्व निखिलेन त्रियध्वयुक्ता
चित्तानि चेतसिकमत्रि वितर्कितानि ।
हीना प्रणीत तथ संक्षिपविक्षिपा ये
एकस्मि चित्तपरिवर्ति प्रजानि सर्वान् ॥ २५ ॥

इति हि भिक्षवोऽभिभूता सर्वे शाक्यकुमारा अभूवन् । बोधिसत्त्व एव विशिष्यते । 15 R 173
तदनन्तर लङ्घिते प्लविते जविते सर्वत्र बोधिसत्त्व एव विशिष्यते स्म । गगनतलगताश्च देवपुत्रा इमा गाथामभाषत —

व्रततपसगुणेन संयमेन क्षमदममैत्रबलेन कल्पकोट्य ।
अयं धनुरघुकायचित्तनेता तस्य जवस्य विशेषता शृणोथ ॥ २६ ॥

इह गृहगत युष्मे पश्यथा सत्त्वसारम् 20 L 152
अपि न दशासु दिशासु गच्छतेऽय क्षणेन ।
अपरिमितजिनाना पूजनामेष कुर्वन्
मणिरतनविचित्रैर्लोकधातुष्वनन्ता ॥ २७ ॥

न च पुन गति आगतिं च अस्यां यूय प्रजानथ तावदृद्धिप्राप्तो ।
कोऽत्र जविति विस्मयो जनेया असदृश एष करोथ गौरवोऽस्मिन् ॥ २८ ॥ 25

एव कृत्वा बोधिसत्त्व एव विशिष्यते स्म ॥

तत्र शाक्या आहु — युद्धेषु तावत्कुमारो विशेषयितव्यो जिज्ञास्यश्च । तत्र बोधिसत्त्व R 174
एकान्त स्थितोऽभूत् । तानि च पञ्चमात्राणि शाक्यकुमारशतानि युगपद्युध्यन्ति स्म ॥

---

१ R गणको for गणक°. २ R °मतोत्तरे for °मत उत्तरे ३ R निषाहस्र रजासियन्तना for the line. ४ R तृणवरि for तृणवन ५ L °प्रक्ष्वेडित° for °प्रक्ष्वेडित° ६ R निखिले for निखिलेन ७ R वय for अय. ८ R जवस्य for जवस्य ९ R शृणोथा for शृणोथ १० R अस्य for अस्या ११ R जगति for जविति

आश्चर्यं भोः। न च नाम अनेन योग्या कृता, इदं चेदृशं शिल्पकौशलम्। गगनतलगताश्च देवपुत्रा राजानं शुद्धोदनं तं च महान्तं जनकायमेवमाहुः — कोऽत्र विस्मयो मनुजाः। तत्कस्मात्?

एष धरणिमण्डे पूर्वबुद्धासनस्थः
शमथधनु गृहीत्वा शून्यनैरात्मबाणै।
5 क्लेशरिपु निहत्वा दृष्टिजालं च भित्वा
शिवविरजमशोकां प्राप्स्यते बोधिमग्र्याम्॥ ३३॥

एवमुक्त्वा ते देवपुत्रा बोधिसत्त्वं दिव्यैः पुष्पैरभ्यवकीर्य प्राक्रामन्॥

एवं लङ्घिते प्राग्वल्लिपिमुद्रागणनासंख्यसालम्भधनुर्वेदे जविते प्लविते तरणे इष्वस्त्रे हस्तिग्रीवायामश्वपृष्ठे रथे धनुष्कलापे स्थैर्यस्थाम्नि सुशौर्ये बाहुव्यायामे अङ्कुशग्रहे पाशग्रहे 10 उद्याने निर्याणे अवयाने मुष्टिबन्धे पदबन्धे शिखाबन्धे छेद्ये भेद्ये दालने स्फालने अक्षुण्णवेधित्वे मर्मवेधित्वे शब्दवेधित्वे दृढप्रहारित्वे अक्षक्रीडायां काव्यकरणे ग्रन्थे चित्रे रूपे रूपकर्मणि धीते अग्निकर्मणि वीणाया वाद्ये नृत्ये गीते पठिते आख्याने हास्ये लास्ये नाट्ये विडम्बिते माल्यग्रथने संवाहिते मणिरागे वस्त्ररागे मायाकृते स्वप्नाध्याये शकुनिरुते स्त्रीलक्षणे पुरुषलक्षणे अश्वलक्षणे हस्तिलक्षणे गोलक्षणे अजलक्षणे मिश्रलक्षणे कौटुभेश्वरलक्षणे निर्घण्टे 15 निगमे पुराणे इतिहासे वेदे व्याकरणे निरुक्ते शिक्षायां छन्दस्विन्यां यज्ञकल्पे ज्योतिषे सांख्ये योगे क्रियाकल्पे वैशिके वैशेषिके अर्थविद्यायां बार्हस्पत्ये आम्भिर्ये आसुर्ये मृगपक्षिरुते हेतुविद्यायां जलयन्त्रे मधूच्छिष्टकृते सूचिकर्मणि विदलकर्मणि पत्रच्छेद्ये गन्धयुक्तौ — इत्येवमाद्यासु सर्वकर्मकलासु लौकिकादिषु दिव्यमानुष्यकातिक्रान्तासु सर्वत्र बोधिसत्त्व एव विशिष्यते स्म॥

अथ खलु पुनस्तेन समयेन दण्डपाणिः शाक्यः स्वां दुहितरं गोपां शाक्यकन्यां 20 बोधिसत्त्वाय प्रादात्। सा च राज्ञा शुद्धोदनेनानुपूर्वेण बोधिसत्त्वस्य वृताभूत्॥

तत्र खल्वपि बोधिसत्त्वश्चतुरशीतिस्त्रीसहस्राणां मध्ये प्राप्तो लोकानुभवनतया रममाणं क्रीडयन्तं परिचारयन्तमात्मानमुपदर्शयति स्म। तासां चतुरशीतेः स्त्रीसहस्राणां गोपा शाक्यकन्या सर्वासामग्रमहिष्यभिषिक्ताभूत्॥

तत्र खल्वपि गोपा शाक्यकन्या न कंचिद् दृष्ट्वा वदनं छादयति स्म श्वश्रूं वा 25 श्वशुरं वान्तर्जनं वा। ते तामुपध्यायन्ति स्म, विचारयन्ति स्म — नववधूका हि नाम प्रतिलीना तिष्ठति, इयं पुनर्विवृतैव सर्वदेति। ततो गोपा शाक्यकन्या एतां प्रवृत्तिं श्रुत्वा सर्वस्यान्तर्जनस्य पुरतः स्थित्वा इमा गाथा अभाषत —

विवृत शोभते आर्य आसनस्थानचङ्क्रमे।
मणिरत्नं ध्वजाग्रे वा भासमानं प्रभास्वरम्॥ ३४॥

---

१ R देग्मता for दोग्मा. २ R om मनुजा ३ R गमये for गमय. ४ R om °पदबन्धे. शिखादौ ५ R कास्यस्कारणे ६ R ग्रन्थरचिते for ग्रन्थे चित्रे. ७ R अधीते for धीते. ८ R शिल्पायां for ९ R आथर्वे for आम्भिर्ये. १० R कौशिकायाम्. ११ R लोकानुभवेन तदा च समान for लोकानुभवनतया १२ R नामाग्र° for स्य ग्रा°. १३ R गता for सर्वदा

गच्छन् वै शोभते आर्य आगच्छन्नपि शोभते।
स्थितो वाथ निषण्णो वा आर्यः सर्वत्र शोभते ॥ ३५ ॥

कथयं शोभते आर्यस्तूष्णीभूतोऽपि शोभते।
कलविङ्को यथा पक्षी दर्शनेन स्वरेण वा ॥ ३६ ॥

कुशचीरनिवस्तो वा मन्दचैलः कृशतनुः। 5
शोभतेऽसौ स्वतेजेन गुणवान् गुणभूषितः ॥ ३७ ॥

सर्वेण शोभते आर्यो यस्य पापं न विद्यते। L 158
विपद्विभूषितो बालः पापचारी न शोभते ॥ ३८ ॥

ये किल्बिषाः स्वहृदये मधुराशु वाचं
कुम्भो विषस्यैव परिषिक्तु यथामृतेन। 10
दुस्पर्श शैलशिलवत् कठिनान्तरात्मा
सर्पस्य वा विरसु दर्शन तादृशानाम् ॥ ३९ ॥

सर्वेषु ते नमिषु सर्वमुपैति सौम्याः
सर्वेषु तीर्थमिव सर्वोपजीव्याः।
दधिक्षीरपूर्णघटतुल्य सदैव आर्या 15
शुद्धात्मदर्शनु सुमङ्गलु तादृशानाम् ॥ ४० ॥

यैः पापमित्र परिवर्जित दीर्घरात्रं R 181
कल्याणमित्ररतनैश्च परिगृहीताः।
पापं विवर्जयि निवेशयि बुद्धधर्मे
सफलं सुमङ्गलु सुदर्शनु तादृशानाम् ॥ ४१ ॥ 20

ये कायसंवृत सुसंवृतकायदोषाः
ये वाचसंवृत सदानवकीर्णवाचः।
गुप्तेन्द्रिया सुनिभृताश्च मनःप्रसन्नाः
किं तादृशान वदनं प्रतिछादयित्वा ॥ ४२ ॥

वस्त्रा सहस्र यदि छादयि आत्मभावं 25
चित्तं च येषु विवृतं न हिरी न लज्जा।
न च येषु ईदृश गुणा नापि सत्यवाक्यं
नग्ने[10] विनग्नतर ते विचरन्ति लोके ॥ ४३ ॥

---

१ R गच्छंस्तु. २ R कुशचीरी° for कुशचीर°. ३ R पापकारी. ४ R मधुराः सुवाचः for मधुराशु वाच. ५ R विषस्य. ६ R सर्वस्य for सर्पस्य. ७ R. शुद्ध सुदर्शन for शुद्धात्मदर्शनु. ८ सुसंयत° for संवृत°. ९ R अवकीर्ण° for. °नवकीर्ण°. १० R नग्ना for नग्ने.

इति हि द्वात्रिंशच्छाक्यकुमाराः सालम्भाय स्थिताः। तदा नन्दश्चानन्दश्च बोधिसत्त्वमभिगतौ सालम्भाय। तौ समनन्तरं स्पृष्टावेव बोधिसत्त्वेन पाणिना। तौ बोधिसत्त्वस्य बलं तेजश्चासहमानौ धरणीतले प्रपतितावभूताम्। तदनन्तरं देवदत्तः कुमारो गर्वितश्च मानी च बलवानेव तब्धः शाक्यमानेन च तैब्धो बोधिसत्त्वेन सार्धं विस्पर्धमानः सर्वावन्तं रङ्गमण्डलं प्रदक्षिणीकृत्य विक्रीडमानो बोधिसत्त्वमभिपतति स्म। अथ बोधिसत्त्वोऽसंभ्रान्त एवात्वरन् दक्षिणेन पाणिना सलीलं देवदत्तं कुमारं गृहीत्वा त्रिर्गगनतले परिवर्त्य माननिग्रहार्थमविहिंसाबुद्ध्या मैत्रेण चित्तेन धरणीतले निक्षिपति स्म। न चास्य कायं व्याबाधते स्म॥

ततो बोधिसत्त्वोऽप्याह — अलमलमनेन विवादेन। सर्व एव एकीभूत्वा इदानीं सालम्भायागच्छतेति॥

10 अथ ते सर्वे हर्षिता भूत्वा बोधिसत्त्वमभिनिपतिताः। ते समनन्तरस्पृष्टा बोधिसत्त्वेन बोधिसत्त्वस्य श्रियं तेजश्च कायबलं स्थामं चासहमानाः स्पृष्टमात्रा एव बोधिसत्त्वेन धरणितले प्रापतन्। तत्र मल्लमनुजशतसहस्राणि हीहीकारकिलकिलाप्रक्ष्वेडितशतसहस्राण्यकार्षुः। गगनतलगताश्च देवपुत्रा महान्तं पुष्पवर्षमभिप्रवृष्यैकस्वरेणेमां गाथामभाषन्त —

यावन्त सत्त्वनयुता दशसू दिशासु
ते दुष्टमल्लमहनग्नसमा भवेयुः।
15 एकक्षणेन निपतेयु नरर्षभस्य
संस्पृष्टमात्र निपतेयु क्षितीतलेस्मिं॥ २९॥

मेरुः सुमेरु तथ वज्रकचक्रवालाः
ये चान्य पर्वत कचिद्दशसू दिशासु।
20 पाणिभ्य गृह्य मसिचूर्णनिभां प्रकुर्यात्
को विस्मयो मनुजआश्रयके असारे॥ ३०॥

एषो द्रुमेन्द्रप्रवरे महदुष्टमल्लं
मारं ससैन्यसबलं सहयं ध्वजाग्रे।
मैत्रीबलेन विनिहत्य हि कृष्णबन्धुं
25 यावत् स्पृशिष्यति अनुत्तरबोधि सान्तम्॥ ३१॥ इति॥

एवं कृत्वा बोधिसत्त्व एव विशिष्यते स्म॥

अथ दण्डपाणिः शाक्यकुमारानेतदवोचत् — जिज्ञासितमिदं दृष्टं च। हन्तेदानीमिष्वक्षेपमुपदर्शयतेति। तत्र आनन्दस्य द्वयोः क्रोशयोरयस्मयी भेरी लक्षं स्थापिताभूत्। अस्यानन्तरं देवदत्तस्य चतुर्षु क्रोशेष्वयस्मयी भेरी स्थापिताभूत्। दण्डपाणेर्योजनद्वयेऽयस्मयी भेरी स्थापिताभूत्।

१ R स्तब्धः for तब्धः. २ R om. तब्धो. ३ R स्वरमाणो for विक्रीडमानो. ४ L सलीडं for सलीलं. ५ R वर्तमानं निग्र॰ for परिवर्त्य माननिग्र॰. ६ R एकीभूत्वा for हर्षिता भूत्वा. ७ L ॰प्रक्ष्वेडित॰ for ॰प्रक्ष्वेडित॰. ८ R om. ॰नयुता. ९ R ॰चक्रवाडा for ॰चक्रवालाः. १० R कुमारे for असारे. ११ L स्पृशिष्यति for स्पृशिष्यति

बोधिसत्त्वस्य दशसु क्रोशेष्वयस्मयी भेरी स्थापिताभूत्। तस्यानन्तरं सप्त ताला अयस्मयी वराहप्रतिमा यन्त्रयुक्ता स्थापिताभूत्। तत्रानन्देन द्वाभ्यां क्रोशाभ्यां भेर्याहताभूत्, ततोत्तरि[1] न शक्नोति स्म। देवदत्तेन चतुःक्रोशस्था भेर्याहताभूत्, नोत्तरि[2] शक्नोति स्म। सुन्दरनन्देन षट्क्रोशस्था भेर्याहताभूत्, नोत्तरि शक्नोति स्म। दण्डपाणिना द्वियोजनस्था भेर्याहताभूत्, निर्विद्धा[3] च नोत्तरि शक्नोति स्म। तत्र बोधिसत्त्वस्य[4] यद्यदेव धनुरुपानीयते स्म, तत्तदेव विच्छिद्यते स्म। ततो बोधिसत्त्व आह – अस्तीह देव[5] नगरे किंचिदन्यद्धनुर्यन्ममारोपणं सहेत कायबलस्थामं च? राजा आह – अस्ति पुत्र। कुमार आह – क्व तद्देव? राजा आह – तव पुत्र पितामहः सिंहहनुर्नामाभूत्, तस्य यद्धनुस्तत्तदेव तर्हि देवकुले गन्धमाल्यैर्महीयते। न पुनस्तत्कश्चिच्छक्नोति स्म तद्धनुरारोपयितुं प्रागेव पूरयितुम्। बोधिसत्त्व आह – आनीयतां देव तद्धनुः। जिज्ञासिष्यामहे[6] ॥

तावद्यावत्तद्धनुरुपनामितमभूत्। तत्र सर्वे शाक्यकुमाराः परमेणापि प्रयत्नेन व्यायच्छमाना न शक्नुवन्ति स्म तद्धनुरारोपयितुं प्रागेव पूरयितुम्। ततस्तद्धनुर्दण्डपाणेः शाक्यस्योपनामितमभूत्। अथ दण्डपाणिः शाक्यः सर्वं कायबलस्थाम संजनय्य तद्धनुरारोपयितुमारब्धोऽभूत्। न च शक्नोति स्म। यावद्बोधिसत्त्वस्योपनामितमभूत्। तद्बोधिसत्त्वो गृहीत्वा आसनादनुत्थितेनैवार्धपर्यङ्कं कृत्वा वामेन पाणिना (गृहीत्वा) दक्षिणेन पाणिना एकाङ्गुल्यग्रेणारोपितवानभूत्[7]। तस्य धनुष आरोप्यमाणस्य सर्वं कपिलवस्तु महानगरं शब्देनाभिविज्ञप्तमभूत्। सर्वनगरजनश्च विह्वलीभूतोऽन्योन्यमपृच्छत् – कस्यायमेवंविधः शब्द इति। अन्ये[8] तदवोचन् – सिद्धार्थेन किल कुमारेण पैतामहधनुरारोपितम्, तस्यायं शब्द इति। तत्र देवमनुजशतसहस्राणि हाहाकारकिलिकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन्। गगनतलगताश्च देवपुत्रा राजानं शुद्धोदनं तं च महान्तं जनकायं[9] गाथयाध्यभाषन्त –

> यथ पूरित एष धनुर्मुनिना
> न च उत्थितु आसनि[10] नो च भूमी।
> निःसंशयु पूर्णमभिप्रायु मुनि-
> र्लघु मेष्यति जित्व च मारचमूम् ॥ ३२ ॥

इति हि भिक्षवो बोधिसत्त्वस्तद्धनुः पूरयित्वेषुं गृहीत्वा तादृशेन बलस्थाम्ना तमिषुं क्षिपति स्म, येन या चानन्दस्य भेरी या च देवदत्तस्य यावत्सुन्दरनन्दस्य यावद्दण्डपाणेस्ताः सर्वा अभिनिर्भिद्य तां च दशक्रोशस्थां स्वकामयस्मयीं भेरीं सप्ततालां यन्त्रयुक्तवराहप्रतिमामभिनिर्भिद्य स इषुर्धरणीतलं प्रविश्य अदर्शनाभासोऽभूत्। यत्र च प्रदेशे स इषुर्भूमितलं भित्त्वा[11] प्रविष्टस्तस्मिन् प्रदेशे कूपः संवृत्तः, यदद्यत्वे[12]ऽपि शरकूप इत्यभिधीयते। तत्र देवमनुष्यशतसहस्राणि हीहीकार-किलिकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन्। सर्वश्च शाक्यगणो विस्मितोऽभूत् आश्चर्यप्राप्तः –

१ R तत उत्तरं for ततोत्तरि. २ R नोत्तरं for नोत्तरि. ३ R निविद्धा for निर्विद्धा. ४ R बोधिसत्त्वेन. ५ R om. देव. ६ R जिज्ञासिष्यामः. ७ R आरोपितमभूत् for °रोपितवानभूत्. ८ R एतदवोचन् for अन्ये तदवोचन्. ९ R जननिकायं for जनकायं. १० R आसनिना च for आसनि नो च. ११ R संभित्वा for भित्त्वा. १२ R अद्यापि for अद्यत्वेऽपि.

याश्चित्तगुप्त सततेन्द्रियसंयताश्च
न च अन्यसत्त्वमनसा स्वपतीन तुष्टाः ।
आदित्यचन्द्रसदृशा विवृतप्रकाशा
किं तादृशान वदनं प्रतिछादयित्वा ॥ ४४ ॥

5　अपि च --

जानन्ति आशयु मम ऋषयो महात्मा
परचित्तबुद्धिकुशलास्तथ देवसंघाः ।
यथ मह्य शीलगुणसंवर अप्रमादो
वदनावगुण्ठनमतः प्रकरोमि किं मे ॥ ४५ ॥

10　अश्रोषीद्भिक्षवो राजा शुद्धोदनो नाम गोपायाः शाक्यकन्याया इमामेवंरूपां[1] सर्वां गाथां प्रतिभाननिर्देशम् । श्रुत्वा च पुनस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातोऽनेकरत्नप्रत्युप्तेन दूष्ययुगेन[2] कोटीशतसहस्रमूल्येन च मुक्ताहारेणाभिजातलोहितमुक्ताप्रत्युप्तया च सुवर्णमाल्या गोपां शाक्यकन्यामभिच्छाद्यैनमुदानमुदानयति स्म--

यथा च पुत्रो मम भूषितो गुणैः
15　तथा च कन्या स्वगुणा[3] प्रभासते ।
विशुद्धसत्त्वौ तदुभौ समागतौ
समेति सर्पिर्यथ सर्पिमण्डे[4] ॥ ४६ ॥ इति ॥

( अनुपूर्वेण यथापूर्वमद्बोधिसत्त्वप्रमुखाः स्वपुरं प्रक्रामन्त ॥ )

20　इति श्रीललितविस्तरे शिल्पसंदर्शनपरिवर्तो नाम द्वादशमोऽध्यायः[5] ॥

---

१ R om. इमाम्.　२ R पुष्पयुगेन for दूष्ययुगेन.　३ R स्वगुणैः.　४ R सर्पिर्मण्डे for सर्पिमण्डे.
५ R om. अध्यायः.

## १३

## संचोदनापरिवर्तस्त्रयोदशः ।

इति हि भिक्षव आत्तमनस्ता हर्षमुदीरयन्त आगता आसन् बोधिसत्त्वस्यान्तःपुरमध्यगतस्यानेकैर्देवैर्नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालाः, ये बोधिसत्त्वस्य पूजाकर्मणे औत्सुक्यमापद्यन्ते स्म ॥ R 183 L 160

तत्र भिक्षवो अपरेण समयेन संबहुलानां देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालानामेतदभवत् — अतिचिरं बतायं सत्पुरुषोऽन्तःपुरे विलम्बितः । ये चास्येमे 5 दीर्घरात्रं परिपाचिताः सत्त्वाश्चतुर्भिः संग्रहवस्तुभिर्दानेन प्रियवाक्येनार्थक्रियया समानार्थतया, यस्य बोधिप्राप्तस्य धर्मं देशितमाज्ञास्यन्ति, तत्सहैव च तानि धर्मभाजनानि सर्वाण्यन्तर्हितानि भविष्यन्ति । बोधिसत्त्वश्च पश्चादभिनिष्क्रम्यानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥

ततस्ते सगौरवाः सप्रतीक्षाः प्राञ्जलीभूता बोधिसत्त्वं नमस्यन्ति स्म । एवमभिप्रायाश्चोदीक्षमाणाः स्थिता अभूवन् — कदा च नाम तद्भविष्यति यद्वयं वरप्रवरं शुद्धसत्त्वमभि 10 निष्क्रामन्तं पश्येम, अभिनिष्क्रम्य च तस्मिन् महाद्रुमराजमूलेऽभिनिषद्य सबलं मारं धर्षयित्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धं दशभिस्तथागतबलैः समन्वागतं चतुर्भिश्च तथागतवैशारद्यैः समन्वागतमष्टादशभिश्चावेणिकैर्बुद्धधर्मैः समन्वागतं त्रिपरिवर्तं द्वादशाकारमनुत्तरं धर्मचक्रं प्रवर्तयन्तं महता बुद्धविक्रीडितेन सदेवमानुषासुरलोकं यथाधिमुक्तया सुभाषितेन संतोषयन्तमिति ॥ R 184

तत्र भिक्षवो बोधिसत्त्वो दीर्घरात्रमसंख्येयान् कल्पानुपादाय सततसमितमपरप्रणेयोऽभूत् । 15 सर्वलौकिकलोकोत्तरेषु धर्मेषु स्वयमेवाचार्यः सर्वकुशलमूलधर्मचर्यासु दीर्घकालं च कालज्ञो वेलाज्ञः समयज्ञोऽभूदच्युतोऽभिज्ञः पञ्चाभिज्ञाभिः समन्वागतोऽभूत् । ऋद्धिपादविक्रीडितः सर्वेन्द्रियकुशलः कालाकालज्ञः कालवेदी महासागर इव प्राप्तां वेलां नातिक्रामति स्म । सोऽभिज्ञाज्ञानबलेन L 161 समन्वागतः स्वयमेव सर्वं जानाति स्म । अयं ताव कालः प्रग्रहस्य, अयं कालो निग्रहस्य, अयं 20 कालः संग्रहस्य, अयं कालोऽनुग्रहस्य, अयं कालः उपेक्षायाः, अयं कालो भाषितस्य, अयं कालस्तूष्णींभावस्य, अयं कालो निष्क्रम्यस्य, अयं कालः प्रव्रज्यायाः, अयं कालः स्वाध्यायस्य, अयं कालो योनिशोमनस्कारस्य, अयं कालः प्रतिविवेकस्य, अयं कालः क्षत्रियपर्षदमुपसंक्रमितुं पेयालं यावदयं कालो ब्राह्मणगृहपतिपर्षदमुपसंक्रमितुम्, अयं कालो देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालभिक्षुभिक्षुण्युपासकोपासिकापर्षदमुपसंक्रमितुम्, अयं कालो धर्मदेशनायाः, अयं कालः प्रतिसंलयनस्य । सर्वत्र बोधिसत्त्वो नित्यकालं कालज्ञो भवति स्म कालवेदी ॥

---

१ R °स्यानेकर्देवनाग° for °स्यानेकैर्देवैर्नाग°. २ R पूजाकर्मणि for °कर्मणे ३ सर्वा for सत्त्वा° ४ R बोधिसत्त्वस्य for °प्राप्तस्य ५ R सप्रतीता for °तीक्षा ६ R पश्यामो for पश्येम ७ R °परिवर्तं for °परिवर्तं° ८ R om इति ९ R परं° for अपर° १० R सार्व° for सर्व° ११ R निष्क्रमस्य for निष्क्रम्यस्य १२ R om पेयालं १३ R प्रतिसंलीनस्य for °संलयनस्य

अथ च पुनर्भिक्षवो धर्मताप्रतिलम्भ एष च चरमभाविकानां[1] बोधिसत्त्वानां यदवश्य दशदिग्लोकधातुस्थितैर्बुद्धैर्भगवद्भिरन्तःपुरमध्यगता संगीतितूर्यनिर्नादितैरेभिरेवंरूपैर्धर्ममुखैः सचोदितव्या भवन्ति ॥

तत्रेदमुच्यते —

5 ये सत्त्वाग्रा दशदिग्लोके तेषु विशेषोत्तर[2] रतितुरियै[3] ।
गाथा गीता इम रतिमधुरा सचोदेन्ती नरवरप्रवरम् ॥ १ ॥
पूर्वि तुभ्य अयु कृतु प्रणिधी दृष्ट्वा सत्त्वान् दु खशतभरितान् ।
लेन[4] त्राण जगतिजशरणे[5] भेष्ये नाथु हितकरु परम ॥ २ ॥
10 साधो वीरा स्मर चरि पुरिमा या ते आसीज्जगहितप्रणिधि ।
कालो वेला अयु तव समयो निष्क्रम्याही ऋषिवरप्रवरा ॥ ३ ॥
परस्यार्थे ते धनवर विविधा त्यक्ता पूर्वे शिरकरचरणा ।
भेष्ये बुद्धो नरमरुदमको लोकस्याग्रो गुणशतनिचित ॥ ४ ॥
त्व शीलेन व्रततपचरित त्व क्षान्तीये जगहितकरण ।
15 त्व वीर्येणा शुभगुणनिचितो ध्याने प्रज्ञे न तु समु त्रिभवे ॥ ५ ॥
क्रोधाविष्टा खिलमलबहुला ते मैत्रीये त्वयि स्फुट सुगता ।
कारुण्य ते बहुविधमबुधे मिथ्यात्वेषू शुभगुणरहिते ॥ ६ ॥
पुण्यज्ञाने शुभनिचितात्मा ध्यानाभिज्ञो प्रतपसि विरजो ।
ओभासेसी दश इम दिशतो मेघा मुक्त शशिरिव विमल ॥ ७ ॥
20 एते चान्ये बहुविध रुचिरा तूर्यघोषा जिनरुतरवैना ।
ये चोदेन्ती सुरनरमहित निष्क्रम्याही अयु तव समयु ॥ ८ ॥ इति ॥

बोधिसत्त्वस्य खलु पुनर्भिक्षवस्तस्मिन् गृहवरप्रधाने सर्वोपकरणसमृद्धिसमुदिते यथाभिप्रायसुखविहारानुकूले अमरपुरभवनप्रकाशे वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादवरप्रवरे सर्वरत्नविचित्रालंकारविविधभक्तिसुविभक्ते उच्छ्रितच्छत्रध्वजपताकानेकरत्नकिङ्किणीजालसमलंकृते 25 अनेकपट्टदामशतसहस्राभिप्रलम्बिते नानारत्नप्रत्युप्ते मुक्ताहाराभिप्रलम्बिते विचित्रपट्टरत्नसंक्रमोपशोभिते अवसक्तपट्टमाल्यदामकलापे गन्धघटिकानिर्धूपिते अवश्यायपटविततवितानेसर्वर्तुकपुष्पपरमसुगन्धिसुरुचिराभिप्रकीर्णपुष्करिणीपुण्डरीककमलनलिनीजालसंस्थानपरिभोगबहुले पत्रगुप्तशुकसारिकाकोकिलहंसमयूरचक्रवाककुणालकलविङ्कजीवंजीवकादिनानाविधद्विजगणमधुरस्वरनिकूजिते नीलवैडूर्यमये धरणीतलसंस्थानपरिभोगे सर्वरूपप्रतिभाससंदर्शने अतृप्तनयनाभिरम्ये

१ R चरमभाविनां for °भाविकानां २ R विशेषा for विशेषान्, ३ R रतितूर्यै for °तुरियै ४ R तेन for लेन ५ R जगति च for जगतिज° ६ R अयो for अयु ७ R क्षुपे for भयुपे ८ R मिथ्यात्वे आशुभ° for मिथ्यात्वेषू शुभ° ९ R आभासेसी १० R तूर्यघोषा for तूर्यघोषा ११ R °रविना for °रवैना १२ R °गन्धघटिका° for °घटिका° १३ L °जीवजीव° for °जीवक व° १४ R धरणीतले for °र्ष°

परमप्रीतिप्रामोद्यसंजनने तस्मिन् गृहवरप्रधानेऽध्यावसतो बोधिसत्त्वस्योदारवरशरणभवननिवासिनोऽमलविमलनिर्मलाङ्गस्यामुक्तमाल्याभरणस्य प्रवरसुरभिगन्धानुलेपनानुलिप्तगात्रस्य शुक्लशुभविमलविशुद्धनिर्मलवस्त्रप्रावृतशरीरस्य अनेकदिव्यदूष्यसूक्ष्मसुविन्यस्तमृदुकाचिलिन्दिकसुखसंस्पर्शवराङ्गरचितशयनतलाभिरूढस्य अमरवधूभिरिव सर्वतो अनवद्याप्रतिकूलदर्शनशुभोपचारचरितस्य अभिरूपान्तःपुरमध्यगतस्य शङ्खभेरीमृदङ्गपणवतुणववीणावल्लकिसंपताडकिपल्लनकुलसुघोषकमधुरवेणुनिर्नादितघोषरुतनानातूर्यसंगीतिसंप्रयोगप्रतिबोधितस्य ये च नारीगणाः स्निग्धमधुरमनोज्ञस्वरवेणुनिर्नादितनिर्घोषरुतेन बोधिसत्त्वं प्रतिसंबोधयन्ति स्म, तेषां दशदिगवस्थितानां बुद्धानां भगवतामधिस्थानेन तेभ्यो वेणुतूर्यनिनादनिर्घोषरुतेभ्य इमा बोधिसत्त्वस्य संचोदना गाथा निश्चरन्ति स्म —

या नार्यो मुदितमनाः प्रसन्नचित्ता
वेणुभ्यो मधुरमनोरमं रणन्ते।
आवेशाद्दशदिग्गतां जिनोत्तमानां
गाथेमा विविधविचित्रचित्ररूपाः॥ ९॥

पूर्वे ते अभु (कृतु) प्रणिधी अभूषि वीरा
दृष्ट्वेमां जनत सदा अनाथभूताम्।
शोचिष्ये जरमरणात्तथान्यदुःखाद्
बुद्धित्वा पदमजरं परं अशोकम्॥ १०॥

तत्साधो पुरवर इत शीघ्रं
निष्क्रम्या पुरिमऋषिभि चीर्णम्।
आक्रम्या धरणितलप्रदेशं
संबुद्ध्या असदृशजिनज्ञानम्॥ ११॥

पूर्वे ते धनरतन विचित्रा
त्यक्ताभूत् करचरणप्रियात्मा।
एषोऽद्या तव समयु महर्षे
धर्मौघं जगि विभज अनन्तम्॥ १२॥

शीलं ते शुभ विमलमखण्डं
पूर्वान्ते वर सततमभूषी।
शीलेनानतिसदृशु महर्षे
शोचेही जगु विविधक्लेशैः॥ १३॥

१ R °मालाभरणस्य for °माल्या°. २ R °पुष्पगुच्छसूक्ष्म° for °दिव्यदूष्यसूक्ष्म°. ३ R °संपताडावचरसुघोष° for °संपताडकिपल्लनकुलसुघोष°. ४ R प्रमुदित° for मुदित°. ५ R पूर्वन्ते for पूर्वंते. ६ R °मरणं for °मरणात्. ७ R पुरवरत for पुरवर इत ८ R° ऋषिभिश्च for °ऋषिभि. ९ R एषोऽद्य for एषोऽद्या. १० R पूर्वं ते for पूर्वान्ते. ११ R अभाषी for अभूषी.

क्षान्तीये भव शतचरितस्त्वं
क्षान्तास्ते जगि विविध दुरुक्ताः।
क्षान्तायै क्षमदमनिरतात्म
नैष्क्रम्ये मति कुरु द्विपदेन्द्रा ॥ १४ ॥
5 वीर्यं ते दृढमचलमकम्प्यं
पूर्वान्ते पृथु सुगत अभूवन्।
धर्षित्वा नमुचि शठं ससैन्यं
शोषिष्ये त्रय सकलअपायात् ॥ १५ ॥
यस्यार्थे व्रततप चरितस्त्वं
10 ध्यायित्वा कलिकलुषकिलेशां।
त्वं वर्षा अमृतजलमोघं
तर्पेही चिरतृषितं अनाथां ॥ १६ ॥
तां पूर्वा गिरवरमनुचिन्त्या
निष्क्रम्या पुरवर इत शीघ्रम्।
15 बुद्धित्वा पदममृतमशोकं
तर्पिष्ये अमृतरसि तृषार्तां ॥ १७ ॥
प्रज्ञाया परिचरिकुशल त्वं
ज्ञानं ते पृथु विपुलमनन्तम्।
मूढानां विमतिपथस्थितानां
20 प्रज्ञाभां शुभरुचिर कुरु त्वम् ॥ १८ ॥
मैत्रायां भव शतचरितस्त्वं
कारुण्ये वर मुदित उपेक्षे।
यामेवा वरचरि चरितस्त्वं
तामेवा चरिं विमज जगस्य ॥ १९ ॥
25 एवं दश दिश जिनतेजै-
र्गाथा वै गुणकुसुमविचित्राः।
तूर्येभ्यो विविधमनुरवन्ते
चोदेन्ती शयनगतकुमारम् ॥ २० ॥
यद पुन प्रमुदित रतिकर प्रमदा-
सुरुचिर सुमधुर प्रभणिषु तुरियैः।

१ R नमुचिशठं for नमुचि शठं. २ R तृषितानमनाथां. ३ R °रुचिरो for °रुचिर. ४ R om. वरचरि. ५ R वरचारि for चरिं. ६ R एतानी for एवं ता. ७ R विविधमनोरमं for विविधमनुरवन्ते. ८ R यदि for यद.

अथ जिन दशदिशि सुरनरदमकाः
गिरवरमनुरवि ततु रवि तुरियैः ॥ २१ ॥
कृत त्वयि हितकर बहुगुण जनतो[1] L 165
निजिनितु निजगुण विचरति[2] गतिपू।
स्मर स्मर पुरिमक व्रततपचरण
लघु व्रज द्रुमवरु स्पृश[3] पदममृतम् ॥ २२ ॥ R 190
क्षुतुपित नरमरु जिनगुणरहिता
त्वयि मति प्रतिबलु अमृतरसददा।
दशबलगुणधर बुधजनमहितं[4]
लघु त्वयि नरपति विभजहि[5] अमृतम् ॥ २३ ॥ 10
त्यजि त्वयि पुरि भवि धनमणिकनका
सखि प्रिय सुत महि सनगरनिगमा।
शिरमपि त्यजि स्वकु[6] करचरनयना[7]
जगति य हितकरु जिनगुणनिरता ॥ २४ ॥
पुरि तुम नरवरसुतु नृपु[8] यदभू 15
नरु तव अभिमुख इम गिरमवची।
दद मम इम महि सनगरनिगमा
त्यजि तद प्रमुदितु न च मनु क्षुभितो ॥ २५ ॥
पुरि तुम नरपति स्वकु[9] द्विज यदभू R 191
गुरुजनि[10] परिचरि न च द्रुहि परतो। 20
स्थपयितु[11] द्विजवर बहुजन कुशले
च्युतु ततु भवगतु मरुपुरनिलयम ॥ २६ ॥
पुरि तुम नृपसुत ऋषिवरु यदभू
छिन्नि तव तनुरुह कलिनृपु रुषितो।
कृत त्वयि कुलक्रिये[12] न च मनु क्षुभितो 25 L 166
पयु[13] तव स्रवि[14] तद करतलचरणे ॥ २७ ॥
स्यमु[15] पुन ऋषिसुत त्वयि पुरि[16] यदभू
व्रतरतु गुरुभरु गिरिवरनिलये।
हत भव नृपतिन विषदृत इषुणा
कृप तव तहि नृप न च मनु क्षुभितो ॥ २८ ॥

१ R जनता for जनतो. २ R विचरसि. ३ R स्पृशय for स्पृश. ४ R °महिते for °महितं. ५ R विभजसि. ६ R स्वकुल for स्वकु. ७ R °चरण° for चर.° ८ R नृपु for नृपु. ९ R स्वकुल for स्वकु. १० R गुरुजन for °जनि. ११ R स्थपयसि. १२ R कुलक्रिये. १३ R भयु for पयु. १४ R मदु for स्रवि. १५ R स्मर for स्यमु. १६ R पुर for पुरि.

पुरि तुम गुणधर मृगपति यदभू
गिरिनदिवहुजलि दुयमनु पुरुषो ।
हित भव त्वयि नरु स्थेलपथि स्थपितो
उपनयि तव अँरि न च मनु क्षुभितो ॥ २९ ॥

पुरि तुम नरवर त्यजि सुतु यदभू
मणि तव प्रपतितु जलधरि विपुले ।
व्यवयितु क्षपैयितु त्वयें महउदधिं
लभि तदें धनमणि दृढबल वयमी ॥ ३० ॥

पुरि तुम सुपुरुष ऋषिवरु यदभू
द्विज तव उपगतु भव मम शरणम् ।
भणि ऋषि द्विजवर ममैं रिपुउपने
त्यजि त्वयैं स्वकि तनु न च द्विज त्यजसे ॥ ३१ ॥

स्यैमु ऋषि उपगतु पुरि द्रुमनिलये
रुचि भणि तरुरुह कति इम गणये ।
सुविदित सुगणित यथ तहि किशला
तथ तव अवितथ समगिर रचिता ॥ ३२ ॥

सुकुल सुगुणधर पुरि द्रुमि वसतो
क्षयगतु न च त्यजि वृतु स्मरि पुरिमम् ।
मरुपति प्रमुदितु तव गुण स्मैरतो
श्रियकरि दुस्करि यथरिव पुरिसा ॥ ३३ ॥

इति तव असदृशा व्रततपचरणा
बहुगुण गुणधर गुणपथि चरतो ।
त्यजि महि सनगरि अयु तव समयो
लघु जगु स्थपयहि जिनगुणचरणे ॥ ३४ ॥

यद प्रमदरतना शुभवस्त्रा भूषितगात्रा
वरप्रवरु तुरियैं सुमनोज्ञा संप्रभणीषु ।
अथ दशैंसु दिशातो जिनतेजैर्गाथ विचित्रा
इति रैंविपू मधुरा स्तवोपा तूर्यस्वरेभ्यः ॥ ३५ ॥

१ R स्थलपति for पथि. २ R पुरि for अरि. ३ R क्षपयतु. ४ R स्वय for त्वय. ५ R तद मणि पुन for तद् घनमणि. ६ R नर for मम. ७ R स्वय for त्वय. ८ स्मर for स्यमु. ९ R हे सुकुलगुणधर for सुकुल सुगुण°. १० R स्मरते for स्मरतो. ११ R यथ शिव for यथरिव. १२ R तुरिय मनोज्ञा for तुरिया सुमनोज्ञा. १३ R दशदिशतो for दशसु दिशातो. १४ R रवि सुमधुरा for रविपू मधुरा.

तव प्रणिधी पुरिमे बहुकल्पां लोकप्रदीपा
  जरमरणग्रसिते अहु लोके त्राणु भविष्ये ।
स्मर पुरिमप्रणिधिं नरसिंहो या ति अभूषी
  अयु समयो त्वमिहा द्विपदेन्द्रा निष्क्रमणाय ॥ ३६ ॥

भवनयुते त्वमिहा बहुदानं दत्तमनेकं 5
  धनकनका रतना शुभवस्त्रा रत्नविचित्रा ।
करचरणा नयना प्रियपुत्रा राज्य समृद्धं
  त्वयि त्यजितं न च ते खिलदोषा याचनकेषु ॥ ३७ ॥

शिशुनृपति त्वमिहा शशिकेतो आसि सुदंष्ट्रो
  नृप करुणामनसो मणिचूडो चन्द्रप्रदीपः । 10
इति प्रमुखा करिया दृढशूरो राजसुनेत्रो L 168
  बहु नृपति नयुता रतं दाने त्वं सविकुर्वन् ॥ ३८ ॥ R 195

तव सुगता चरितो बहुकल्पां शीलचरीये
  मणिरत्ना विमला सदृशाभूच्छीलविशुद्धिः ।
त्वयि चरता चमरी यथ बालं रक्षितु शीलं 15
  कृतु त्वमिहा जगति विपुलार्थं शीलव्रतेना ॥ ३९ ॥

गजवरु त्वमिहा रिपुलुब्धे विद्धु इषूणा
  नृप करुणा जनिया अतिरौद्रे छादितु शोमे ।
परित्यजि ते रुचिरा शुभदन्ता न च त्यजि शीलं
  इति प्रमुखा करिया बहु तुभ्यं शीलविकुर्वी ॥ ४० ॥ 20

त्वयि सहिता जगतोऽहित अनेका दुःखसहस्रा
  बहुकटुकावचनं वधबन्धा क्षान्तिरतेना ।
परिचारित पुरिमे नर ये ते सर्वसुखेना
  पुन वधकास्तव तेह अभूवन् तत्र ति क्षान्तम् ॥ ४१ ॥ R 196

गिरिप्रवरानिलये तुम नाथा ऋक्षु यदासी 25
  हिमकिरणा सलिला भयभीतं त्वं नरु गृह्य ।
परिचरसि विविधा फलमूलैः सर्वसुखेना
  लघु वधकां [illegible] तवा उपनेत्री तं च ति क्षान्तम् ॥ ४२ ॥

---

१ R नरसिंहपतेऽभूद् for नरसिंहा या ति अभूषीद्. २ R प्रियसुत for °पुत्रा. ३ R रतिदाने for रत दाने. ४ R सर्वि कुर्वन् for सविकुर्वन्. ५ R चरिता for चरितो. ६ R सदृशशील° for सदृशाभूच्छील°. ७ R चरि for चमरी. ८ R विपुलार्थः for °लार्थ. ९ R रिपु लब्धो for° लुब्धे. १० R परिवारित for °चारित. ११ R नरपते for नर ये ते. १२ R तेऽप्यथुत तं च for तेह अभूवन् तत्र. १३ R हिमकिरणैर्मलिनं for हिमकिरणा सलिला. १४ R तवापनेती for तवा उपनेत्री.

दृष्टु संस्थितमचलमकम्प्यं वीर्यु तवासीत्
व्रततपसा विविधा गुणज्ञानं एषत बोधिम् ।
कृतु अबलो नमुची वशवर्ती वीर्यबलेना
अयु समयो त्वमिहा नरसिंहा निष्क्रमणाय ॥ ४३ ॥

हयप्रवरु त्वमिहा पुरि आसी हेमसुवर्णो
लघु गगने व्रजसे कृपजातो राक्षसिद्वीपम् ।
व्यसनगत मनुजां तद गृह्या क्षेमि थपेसी
इति प्रमुखा करिया बहु तुभ्यं वीर्यविकुर्वा ॥ ४४ ॥

दमशमथे नियमाहतक्लेशा ध्यायिन अग्रो
लघु चपलं विषये रतिलोलं चित्तु दमित्वा ।
कृतु स्वगुणो त्वमिहा जगतोऽर्थे ध्यानरतेना
अयु समयो त्वमिहा वरसत्वा ध्यानविकुर्वा ॥ ४५ ॥

त्वं पुरिमे ऋषि सुस्थितु आसी ध्यानरतीये
नृपरहिता मनुजा त्वमु गृह्या राज्यभिषिञ्ची ।
दशकुशली जनिता थपिता ते ब्रह्मपथेषु
च्युत मनुजा व्रजिषू तद सर्वे ब्रह्मनिकेतम् ॥ ४६ ॥

दिशिविदिशि विविधागतिज्ञाने त्वं सुविधिज्ञो
परचरिता जगति रतज्ञाने इन्द्रियज्ञाने ।
नयविनये विविधामतिवारे पारगतस्त्वं
अयु समयो त्वमिहा नृपसूनो निष्क्रमणाय ॥ ४७ ॥

त्वयि पुरिमा जनता इम दृष्ट्वा दृष्टिविपन्ना
जरमरणा विविधा बहुदुःखे कृच्छ्रगता हि ।
भवविभवंकरणो ऋजुमार्गे त्वामनुबद्धा
हततमस त्वमिहा कृतु लोके अर्थु महन्तो ॥ ४८ ॥

इति विविधा रुचिरा गुणयुक्ता गाथ विचित्रा
ततु रविषु तुरियेभी जिनतेजा चोदयि वीरम् ।
दुःखभरितजनेते इह दृष्ट्वा मा त्वमुपेक्षा
अयु समयो त्वमिहा वरबुद्धे निष्क्रमणाय ॥ ४९ ॥

---

१ R कृतु लोकन for कृतु अबलो. २ R आसीद् for आसी. ३ R व्यसनशत for ° गत. ४ मनुजान्तद for मनुजां तद. ५ R आग्या for अग्रो. ६ R स्वगुणा for स्वगुणो. ७ R om. अयु समयो. ८ R त्वमिहावर for त्वमिहा वर°. ९ R त्वयु. १० ब्रह्मपदेषू for °पथेषु. ११ R व्रजिर for व्रजिषू. १२ R om. त्वमिहा. १३ R °दुःखैः for °दुःखे. १४ R भवति तव करणा for भवविभवंकरणो. १५ R °जनत for °जनेते. १६ R वरबुद्ध for °बुद्धे.

विचित्रवस्त्ररत्नहारगन्धमाल्यभूषिता
  प्रसन्नचित्त प्रेमजात नारियो प्रहर्षिता ।
प्रबोधयन्ति येऽप्रसत्त्व तूर्यसंप्रवादितैः
  जिनानुभावि एकरूप गाथ तूर्य निश्चरी ॥ ५० ॥

यस्यार्थि तुभ्य कल्प नैक त्यक्तु त्याग दुस्त्यजा 5 R 199
  सुचीर्ण शीलु क्षान्ति वीर्य ध्यान प्रज्ञ भाविता ।
जगद्धितार्थ सो ति कालु सांप्रतं उपस्थितो
  नैष्क्रम्यबुद्धि चिन्तयाशु मा विलम्ब नायक ॥ ५१ ॥

त्यक्तु पूर्वि रत्नकोश स्वर्णरूप्यभूषणा
  यष्टा ति यज्ञ नैकरूप तासु तासु जातिषु । 10
त्यक्त भार्य पुत्र धीत कायु राज्यु जीवितं
  बोधिहेतुरप्रमेय त्यक्तु दुस्त्यजा त्वया ॥ ५२ ॥

अभूवि त्वं अदीनपुण्य राज विश्रुतश्रियो
  निमिंधरो निमिश्च कृष्ण( बन्धु ) ब्रह्मदत्त केसरी ।
सहस्रयज्ञ धर्मचिन्ति अर्चिमान् दृढधनु 15
  सुचिन्तितार्थ दीनसत्त्व ये ति त्यक्त दुस्त्यजा ॥ ५३ ॥

सुतसोम दीप्तवीर्य पुण्यरश्मि यो सोऽभू
  महत्यागवन्तु श्यामवन्तु यः कृतज्ञ त्वं अभूः ।
राजर्षि चन्द्ररूपवन्तु शूर सत्यवर्धनो R 200
  सुभाषितंगवेषि राजि असि सुमतिं च सूरतो ॥ ५४ ॥ 20

चन्द्रप्रभो विशेषगामि रेणुभू दिशांपति L 171
  प्रदानशूर काशिराजु रत्नचूड शान्तगः ।
एति चान्यि पार्थिवेन्द्र येभि त्यक्त दुस्त्यजा
  यथा ति वृष्ट त्यागवृष्टि एष धर्म वर्षही ॥ ५५ ॥

दृष्टा ति पूर्वि सत्त्वसार गङ्गवालुकोपमा 25
  कृता ति तेषु बुद्धपूज अप्रमेयचिन्तिया ।
वराग्रबोधि एषमाण सत्त्वमोक्षकारणाद्
  अयं स कालु प्राप्तु सूर निष्क्रमा पुरोत्तमात् ॥ ५६ ॥

---

१ R °प्रशत for °प्रस. २ R यष्टु for यष्टा. ३ R त्यक्ता ति भार्या for त्यक्त भार्य पुत्र धीत. ४ R अभूवीस् for अभूवि. ५ R विश्रुत श्रिया for °श्रियो. ६ R दृढधनी for °धनु. ७ R दीनसत्त्वा यं for दीनसत्त्व ये ति. ८ R दुस्त्यजा सुता- for दुस्त्यजा. ९ R चन्द्रप्रभा for °प्रभो. १० R रेणुभूदिशा for रेणुभू दिशांपति. ११ R सन्तत for शान्तगः. १२ R तेषु for तेष.

प्रथमेन ते अमोघदर्शी शालपुष्पपूजितो
विरोचनः[1] प्रसन्नचित्त प्रेक्षितः क्षणान्तरम्[2] ।
हरीतकी च एक दत्त दुन्दुभिस्वराय ते[3]
तृणोल्थे[4] गृह्य धारिता ति दृष्ट चन्दनं गृहम् ॥ ५७ ॥

पुरप्रवेशि रेणु दृष्ट क्षिप्तु चूर्णमुष्टिका
धर्मेश्वराय साधुकारु दत्तु[5] धर्म भाषतो[6] ।
नमो नमः समन्तदर्शी दृष्ट वाच भाषिता
महार्चिस्कन्धि स्वर्णमाल क्षिप्त हर्षितेन ते ॥ ५८ ॥

धर्मध्वजो दशाप्रदानि रोधु मुक्त मुष्टिना
अशोकपुष्पि ज्ञानकेतु य्वाँगुपान[7] सारथिः ।
रत्नशिखी च दीपदानि पद्मयोनि ओषधी
सर्वाभिभूश्च मुक्तहारि पद्मदानि सागरो ॥ ५९ ॥

वितानदानि पद्मगर्भि सिंहु वर्षसंस्तरे
शालेन्द्रराज[8] सर्पिदानि क्षीरत्यागि पुष्पिती ।
यशोदत्तु कुरुण्टपुष्पि सत्यदर्शी भोजने[9]
कायु प्रणामि ज्ञानमेरु नागदत्तु चीवरे ॥ ६० ॥

अत्युच्चगामि चन्दनाग्नि तीक्ष्णलोहमुष्टिना
महाव्यूह पद्मदानि रश्मिराज रत्नभिः ।
शाक्यमुनि च सुवर्णमुष्टि[10] इन्द्रकेतु संस्तुतो
सूर्याननो वतंसके हि स्वर्णयष्टि सूमती ॥ ६१ ॥

नागाभिभू मणिप्रदानि पुष्प दूष्यसंस्तरे
भैषज्यराजु रत्नछत्रि सिंहकेतु आसने ।
गुणाग्रधारि रत्नजालि सर्ववादि काश्यपो
गन्धाग्नि चूर्णि मुक्त आर्चिकेतु पुष्पचैत्यके ॥ ६२ ॥

अक्षोभ्यराज कूटागारि माल्य लोकपूजितो
तगरशिखि च राज्यत्यागि सर्वगन्धि दुर्जयो ।
महाप्रदीप आत्मत्यागि भूषणे पद्मोत्तरो
विचित्रपुष्पि धर्मकेतु दीपकारि उत्पलैः ॥ ६३ ॥

---

१ R वैरोचनः for विरो°. २ R प्रेक्षि तत्क्षणा° for प्रेक्षितः क्षणा°. ३ R दुदुभिः स्वरायते for दुन्दुभिस्वराय ते. ४ R तृणोल्क for तृणोल्थ. ५ R साधका स्दन्तु for साधुकारु दत्तु. ६ R धर्म भाषते for धर्म भाषतो. ७ R योगयान for य्वागुपान. ८ R सारेन्द्र° ; L सालेन्द्र° for शालेन्द्र°. ९ R भाजने for भोजने. १० R स्वर्णमुष्टियष्टि for सुवर्णमुष्टि.

एति चान्यि सत्त्वसार ये[1] ति पूर्व पूजिता
 नानारूप चित्रित्र पूर्जे अन्यजेयपुर्नता ।
स्मराहि ते अतीत बुद्ध ता च पूज शास्तुना
 अनाथसत्त्व शोकपूर्ण मा उपेक्षि निष्क्रमा ॥ ६४ ॥

दीपनरेति दृष्टमात्रि लब्ध क्षान्ति उत्तमा 5
 अभिज्ञ पञ्च अच्युंता ति लब्ध आनुलोमिका ।
अतोत्तरेण एकमेक बुद्ध पूजचिन्तिया
 प्रवर्तिता असख्यकल्प सर्वलोकधातुषू ॥ ६५ ॥

क्षीणा ति कल्प अप्रमेय ते च बुद्ध निर्वृता L 173
 तत्रापि सर्वि आर्मभानि ते च नाम क्व गता । 10
क्षयान्तधर्मि सर्वि भावु नास्ति नित्यु संस्कृते
 अनित्य काम राज्यभोग निष्क्रमा पुरोत्तमात् ॥ ६६ ॥ R 204

जरा च व्याधि मृत्यु एन्ति दारुणा महाभया
 हुताशनो व उग्रतेज भीम कल्पसंक्षये ।
क्षयान्तधर्मि सर्वि भावु नास्ति नित्यु संस्कृते 15
 सुकृच्छ्र प्राप्त सत्त्व निष्क्रमा गुणधरा ॥ ६७ ॥

यद नारिगणस्तुणवेणुरवै
 विविधैस्तुर्यै प्रतिबोधयिषु ।
सुखशयनगत मनुजाधिपतिं
 सद तूर्यरवो अयु निश्चरते ॥ ६८ ॥ 20

ज्वलित त्रिभव जरव्याधिदुखै
 मरणाग्निप्रदीप्तमनाथमिदम् ।
भवनि शरणे सद मूढ जगत्
 भ्रमती भ्रमरो यथ कुम्भगतो ॥ ६९ ॥

अध्रुव त्रिभव शरदभ्रनिभ 25
 नटरङ्गसमा जगि ऊर्मिचुती ।
गिरिनद्यसम लघुशीघ्रजव
 व्रजतायु जगे यथ विद्यु नभे ॥ ७० ॥

---

१ R येभि for ये ति  २ R om पूज  ३ R om °जन्य  ४ R अच्युतानि for अच्युता ति
५ R ततोत्तरेणैकमेक for अतोत्तरेण एकमेक  ६ R आत्मभाव  ७ R जराव्याध्याधि for जरा च व्याधि
८ L दारुणो for दारुणा  ९ R न च निसरणे for भवनि शरणे  १० R जन्मिच्युते for ऊर्मिचुती

भुवि देवपुरे त्रिअपायपथे
भवतृष्णअविद्यवशा जनता ।
परिवर्तिषु पञ्चगतिष्वबुधाः
यथ कुम्भकरस्य हि चक्रभ्रमी ॥ ७१ ॥

5 प्रियरूपवरैः सह स्निग्धरुतैः
शुभगन्धरसैः वरस्पर्शसुखैः ।
परिषिक्तमिदं कलिपाश जगत्
मृगलुब्धकपाशि यथैव कपि ॥ ७२ ॥

सभया सरणाः सद वैरकराः
10 बहुशोक उपद्रव कामगुणाः ।
असिधारसमा विषपत्रनिभा
जहितार्यजनैर्यथ मीढघटाः ॥ ७३ ॥

स्मृतिशोककरास्तमसीकरणाः
भयहेतुकरा दुखमूल सदा ।
15 भवतृष्णलताय विवृद्धिकराः
सभया सरणा सद कामगुणाः ॥ ७४ ॥

यथ अग्निखदा ज्वलिता सभया
तथ काम इमे विदितार्यजन. ।
महपङ्कसमा असिशुम्भुसमाः
20 मधुदिग्ध इव क्षुरधार यथा ॥ ७५ ॥

यथ सर्पिसरो यथ मीढघटा.
तथ काम इमे विदिता विदुषाम् ।
तथ शूलसमा द्विजपेशिसमाः
यथ श्वान करङ्क सवैरमुखाः ॥ ७६ ॥

25 उदचन्द्रसमा इमि कामगुणाः
प्रतिबिम्ब इवा गिरिघोष यथा ।
प्रतिभाससमा नटरङ्गसमा.
तथ स्वप्नसमा विदितार्यजनैः ॥ ७७ ॥

---

१ R °पाणि for °पाशि. २ R हि मद्दकमपि for यथैव कपि. ३ R मरणाः for सरणा. ४ R विषयन्त्र° for विषपत्र°. ५ R त्यजहिता for जहिता°. ६ R विवृद्धकराः for विवृद्धि°. ७ R असिसिन्धुसमा for असिशुम्भु°. ८ R सवैर तथा for सवैरमुखाः. ९ R उदकचन्द्र° for उदचन्द्र°.

क्षणिका वशिका इमि कामगुणाः
[1]तय मायमरीचिसमा अलिकाः।
उदबुद्बुदफेनसमा वितथा
परिकल्पसमुत्थित बुद्ध बुधैः ॥ ७८ ॥

प्रथमे वयसे वररूपधरः
प्रिय इष्ट मतो इय बालचरी।
जरव्याधिदुखै हततेजवपुं
विजहन्ति मृगा इव शुष्कनदीम् ॥ ७९ ॥

धनधान्यवरो बहुद्रव्यबली
प्रिय इष्ट मतो इय बालचरी।
परिहीनधनं पुन कृच्छ्रगतं
विजहन्ति नरा इव शून्यटवीम् ॥ ८० ॥

यथ पुष्पद्रुमो सफलेव द्रुमो
नरु दानरतस्तथ प्रीतिकरो।
धनहीन जरार्दितु याचनको
भवते तद अप्रियु गृध्रसमः ॥ ८१ ॥

प्रभु द्रव्यबली वररूपधरः
प्रियसंगमनेन्द्रियप्रीतिकरो।
जरव्याधिदुखार्दितु क्षीणधनो
भवते तद अप्रियु मृत्युसमः ॥ ८२ ॥

जरया जरितः समतीतवयो
द्रुम वि[3]द्युहतेव यथा भवति।
जरजीर्ण अगारु यथा स[4]भयो
जरनिःसरणं लघु ब्रूहि मुने ॥ ८३ ॥

जर शोषयते नरनारिगणं
यथ मालुलता घनशालवनम्।
जर वीर्यपराक्रमवेगहरी
जर पङ्कनिमग्न यथा पुरुषो ॥ ८४ ॥

जर रूपसुरूपविकल्पहरी-
जर[2] तेजहरी ब[5]लस्थामहरी।

---

१ R त इमे तय अलिकेदकमृगा for तय मायमरीचिसमा अलिका. २ R om. तेज°. ३ R विद्युदव for विद्युद्धतेव. ४ R समयो for सभयो. ५ R om. बलस्था°.

सद सौख्यहरी परिभावकरी
    जर मृत्युकरी जर ओजहरी ॥ ८५ ॥
बहुरोगशतै घनव्याधिदुखैः
    उपसृष्ट जगज्ज्वलतेव मृगाः ।
जरव्याधिगतं प्रसमीक्ष्य जगत्
    दुखनिःसरणं लघु देशयही ॥ ८६ ॥
शिशिरे हि यथा हिमधातु महान्
    तृणगुल्मवनौषधिओजहरो ।
तथ ओजहरो अहु व्याधिजरो
    परिहीयति इन्द्रिय रूप बलम् ॥ ८७ ॥
धनधान्यमहार्थक्षयान्तकरो
    परितापकरः सहव्याधिजरो ।
प्रतिघातकरः प्रियु द्वेषकरः
    परिदाहकरो यथ सूर्य नभे ॥ ८८ ॥
मरणं च्यवनं च्युति कालक्रिया
    प्रियद्रव्यजनेन वियोगु सदा ।
अपुनागमनं च असंगमनं
    द्रुमपत्रफला नदिस्रोत यथा ॥ ८९ ॥
मरणं वशितामवशीकुरुते
    मरणं हरते नदि दारु यथा ।
असहायु नरो व्रजतेऽद्वितियो
    स्वककर्मफलानुगतो विवशः ॥ ९० ॥
मरणो ग्रसते बहुप्राणिशतं
    मकरेव जला हरि भूतगणम् ।
गरुडो उरगं मृगराजु गजं
    ज्वलनेव तृणौषधिभूतगणम् ॥ ९१ ॥
इम ईदृशकै बहुदोषशतैः
    जगु मोचयितुं कृत या प्रणिधि ।
स्मर तां पुरिमां प्रणिधानचरीं
    अयु कालु तवा अभिनिष्क्रमितुम् ॥ ९२ ॥

---

१ L सद for सद. २ R बलस्थामहरी for परिभावकरी. ३ R प्रसमीक्ष्य. ४ R बहु° for अहु. ५ R सद for सह°. ६ R दुःखकरः for द्वेष°. ७ R वशितानवशी° for वशितामवशी°. ८ R °नुगता for °नुगतो. ९ R मरणं.

यद नारिगणः प्रहर्षितो
बोधयती तुरियैर्महामुनिम् ।
तद गाथ विचित्र निश्चरी
तूर्यशब्दात् सुगतानुभावतः ॥ ९३ ॥

लघु तद्व्रजंति सर्वसंस्कृतं
अचिरस्थायि नभेव विद्युतः । 5
अयु कालु तवा उपस्थितः
समयो निष्क्रमणाय सुव्रत ॥ ९४ ॥ R 209

संस्कार अनित्य अध्रुवाः
आमकुम्भोपम भेदनात्मकाः । 10
परकेरक याचितोपमाः
पांशुनगरोपम तावकालिकाः ॥ ९५ ॥

संस्कार प्रलोपधर्मिमे
वर्षकालि चलितं व लेपनम् ।
नदिकूल इवा सवालुकं 15 L 176
प्रत्ययाधीन स्वभावदुर्बलाः ॥ ९६ ॥

संस्कार प्रदीपअर्चिवत्
क्षिप्रउत्पत्तिनिरोधधर्मिकाः ।
अनवस्थित मारुतोपमाः
फेनपिण्डेव असार दुर्बलाः ॥ ९७ ॥ 20

संस्कार निरीह शून्यकाः
कदलीस्कन्धसमा निरीक्षतः ।
मायोपम चित्तमोहना
बालउल्लापन उक्त मुष्टिवत् ॥ ९८ ॥

हेतूभि च प्रत्ययेभि चा 25
सर्वसंस्कारगतं प्रवर्तते ।
अन्योन्य प्रतीत्य हेतुतः
तदिदं बालजनो न बुध्यते ॥ ९९ ॥

यथ मुञ्ज प्रतीत्य बल्वजं
रज्जु व्यायामबलेन वर्तिता ।

---

१ R तद्व्रजति for तद्व्रजंति. २ R निष्क्रमाय. ३ R परकेल्लिक for °केरक. ४ R °निरोधधर्मकाः for °धर्मिकाः. ५ R निरीक्षत for °क्षत°. ६ R उल्क for उक्त. ७ R बल्कजो for बल्वजं.

घट्टियन्त्र सचक्र वर्तते
एष एकैकश नास्ति वर्तना ॥ १०० ॥

तथ सर्वभवाङ्गवर्तिनी
अन्यमन्योपचयेन निश्रितौ।
एकैकश तेषु वर्तिनी
पूर्वपरान्तत नोपलभ्यते ॥ १०१ ॥

बीजस्य सतो यथाङ्कुरो
न च यो बीज स चैव अङ्कुरो।
न च ततो न चैव तत्
एवमनुच्छेद अशाश्वत धर्मता ॥ १०२ ॥

संस्कार अविद्यप्रत्ययाः
ते संस्कारे न सन्ति तत्त्वतः।
संस्कार अविद्य चैव हि
शून्य एके[3] प्रकृतीनिरीहकाः ॥ १०३ ॥

मुद्रात्प्रतिमुद्र दृश्यते
मुद्रसंक्रान्ति न चोपलभ्यते।
न च तत्र न चैव शाश्वतो
एव संस्कारानुच्छेदशाश्वताः ॥ १०४ ॥

चक्षुश्च प्रतीत्य रूपतः
चक्षुविज्ञानमिहोपजायते।
न च चक्षुषि रूप निश्रितं
रूपसंक्रान्ति न चैव चक्षुषि ॥ १०५ ॥

नैरात्म्यशुभाश्च धर्मिमे
पुनरात्मेति शुभाश्च कल्पिताः।
विपरीतमसद्विकल्पितं
चक्षुविज्ञान ततोपजायते ॥ १०६ ॥

विज्ञाननिरोधसंभवं
विज्ञानोत्पादव्ययं विपश्यति।
क्वचिद्धि च गतं अनागतं
शून्य मायोपम योगि[7] पश्यति ॥ १०७ ॥

---

१ R निःसृता for निश्रिता. २ R om तत्. ३ R एवं for एके. ४ R निःसृतं for निश्रितं. ५ R मेव पुन॰ for पुन॰. ६ L निरोधसंभवं for निरोध॰. ७ R यो विपश्यति for योगि पश्यति.

L 177

अरणिं यथ चोत्तरारणिं
हस्तव्यायाम त्रयेभि संगति ।
इति प्रत्ययतोऽग्नि जायते
जातु कृतार्थु लघु निरुध्यते ॥ १०८ ॥

अथ पण्डितु कश्चि मार्गते 5
कुतयं आगतु कुत्र याति वा ।
विदिशो दिशि सर्वि मार्गतो
नागति नास्य गतिश्च लभ्यते ॥ १०९ ॥

स्कन्धधात्वायतनानि धातवः
तृष्ण अविद्या इति कर्मप्रत्यया । 10
सामग्रि तु सत्त्वसूचना
स च परमार्थतु नोपलभ्यते ॥ ११० ॥

कण्ठोष्ठ प्रतीत्य तालुकं
जिह्वापरिवर्ति अक्षरा ।
न च कण्ठगता न तालुके 15
अक्षरैकैक तु नोपलभ्यते ॥ १११ ॥

सामग्रि प्रतीत्यतश्च सा
वाचमनबुद्धिवशेन निश्चरी ।
मन वाच अदृश्यरूपिणी
बाह्यतोऽभ्यन्तर नोपलभ्यते ॥ ११२ ॥ 20

उत्पादव्ययं विपश्यतो
वाच रुतघोषस्वरस्य पण्डितः ।
क्षणिकां वशिकां तदा दशी R 212
सर्वा वाच प्रतिश्रुतकोपमाम् ॥ ११३ ॥

यथ तन्त्रि प्रतीत्य दारु च 25
हस्तव्यायाम त्रयेभि संगति ।
तुणवीणसुघोषकादिभिः
शब्दो निश्चरते तदुद्भवः ॥ ११४ ॥

अथ पण्डितु कश्चि मार्गते
कुतयं आगतु कुत्र याति वा ।

१ R कृतु पार्थु for कृतार्थु. २ R नागतिरस्य for नागति नास्य. ३ R प्रतीतश्च for प्रतीत्यतश्च.
४ R तन्त्र for तन्त्रि. ५ R कुतोऽयं for कुतयं.

विदिशो दिशि सर्वि मार्गतः
शब्दगमनागमनं न लभ्यते ॥ ११५ ॥

तथ हेतुभि प्रत्ययेभि च
सर्वसंस्कारगतं प्रवर्तते ।
योगी पुन भूतदर्शनात्
शून्य संस्कार निरीह पश्यति ॥ ११६ ॥

स्कन्धायतनानि धातवः
शून्य अध्यात्मिक शून्य बाह्यकाः ।
सत्त्वात्मविविक्तमनालया[1]
10 धर्माकाशस्वभावलक्षणाः ॥ ११७ ॥

इय ईदृश धर्मलक्षणा
बुद्ध दीपंकर दर्शने त्वया ।
अनुबुद्ध स्वयं यथात्मना
तथ बोधेहि सदेवमानुषा ॥ ११८ ॥

L 178 15 विपरीतअभूतकल्पितैः
रागदोषैः[2] परिदह्यते जगत् ।
R 213 कृपमेघसमाम्बुशीतलां
मुञ्च धाराममृतस्य नायका ॥ ११९ ॥

त्वयि यस्य कृतेन पण्डिता
20 दत्तु दानं बहुकल्पकोटिषु ।
संप्राप्य हि बोधिमुत्तमां
आर्यधनसंग्रह करिष्य प्राणिनाम् ॥ १२० ॥

तां पूर्वचरीमनुस्मरा
नार्थ धनहीन दरिद्र दुःखिनाम् ।
25 मा उपेक्षहि सत्त्वसारथे
आर्यधनसंग्रहि तेषु कुर्वहि ॥ १२१ ॥

त्वयि शील सदा सुरक्षितं
पिधनार्थाय अपायभूमिनाम् ।
स्वर्गामृतद्वारमुत्तमां
दर्शयिष्ये बहुसत्त्वकोटिनाम् ॥ १२२ ॥

---

१ R [illegible] for [illegible]. २ R रागद्वेषैः for °दोषैः.

तां पूर्वचरीमनुस्मरा
  यद्वा द्वार निरयाय भूमिनाम्।[1]
स्वर्गामृतद्वार मुञ्चही
  ऋद्धयहि शीलव्रतो विचिन्तितम्॥ १२३॥[2]

त्वयि क्षान्ति सदा सुरक्षिता[3] 5
  प्रतिघक्रोधशमार्थ देहिनाम्।
भावार्णव सत्त्व तारिया
  स्थापयिष्ये शिवि क्षेमि निर्ज्वले॥ १२४॥[4]

तां पूर्वचरीमनुस्मरा
  वैरव्यापादविहिंसआकुलाम्। 10
मा उपेक्ष विहिंसचारिणः R 21a
  क्षान्तिभूमीय स्थपे इमं जगत्॥ १२५॥

त्वयि वीर्य यदर्थ सेवितं
  धर्मनावं समुदानयित्वना।
उत्तार्य जगद्भवार्णवात् 15
  थेपयिष्ये शिवि क्षेमि निर्ज्वले॥ १२६॥

तां पूर्वचरीमनुस्मरा
  चतुरोघैरिव मुह्यते जगत्।
लघु वीर्यबलं पराक्रमा
  सत्त्व संतारयही अनायकां॥ १२[७]॥[5] 20

त्वयि[6] ध्यानकिलेशध्येषणा
  भाविता यस्य कृतेन सूरता।
भ्रान्तेन्द्रिय प्राकृतेन्द्रियां
  कपि वित्तार्यपथे स्थपेय्यहम्॥ १२८॥[7]

तां पूर्वचरीमनुस्मरा
  क्लेशजालैरिहमाकुलं जगत्।
मा उपेक्षहि क्लेशुपद्रुतां
  ध्यानैकाग्रि स्थपेहिमां प्रजाम्॥ १२९॥

---

१ R निरयावभूमिनां for निरयाय भूमिनाम्. २ R ऋद्धि हि for ऋद्धयहि. ३ R त्वयु for त्वयि.
४ R स्थापयिष्यसि त्रिपक्षनिर्ज्वले for the line. ५ R तारय हे नायका for संतारयही अनायकां.
६ R त्वयु for त्वय. ७ R विन्नार्य॰ for वित्तार्य॰.

L 179 त्वयि प्रज्ञ पुरा सुभाविता
मोहविद्यान्धतमोवृते जगे।
बहुधर्मशतामिलोकने
दास्ये चक्षुषि तत्त्वदर्शनम् ॥ १३० ॥
5 ता पूर्वचरीमनुस्मरा
मोहविद्यान्धतमोवृते जगे।
R 215 ददही वरप्रज्ञ सुप्रभा
धर्मचक्षु विमल निरञ्जनम् ॥ १३१ ॥
इयमीदृश गाथ निश्चरी
10 तूर्यसंगीतिरवातु नारिणाम्।
य श्रुत्व मिदं विवर्जिया
चित्तु प्रेषेति वराग्रबोधये ॥ १३२ ॥ इति ॥

इति हि भिक्षवोऽन्तःपुरमध्यगतो बोधिसत्त्वोऽविरहितोऽभूद्धर्मश्रवणेन, अविरहितोऽभूद्धर्ममनसिकारेण। तत्कस्माद्धेतोः? तथा हि भिक्षवो बोधिसत्त्वो दीर्घरात्रं सगौरवोऽभूत्। धर्मेषु
15 धर्मभाणकेषु चाध्याशयेन धर्मार्थिको धर्मकामो धर्मरतिरतोऽभूत्। धर्मपर्येष्ट्यतृप्तो यथाश्रुत धर्मसंप्रकाशकः, अनुत्तरो महाधर्मदानपतिः, निरामिषधर्मदेशको धर्मदानेनामत्सरः, आचार्यमुष्टिनिगतो धर्मानुधर्मप्रतिपन्नो धर्मप्रतिपत्तिशूरः, धर्मलयनो धर्मत्राणो धर्मशरणो धर्मप्रतिशरणो धर्मपरायणः धर्मनिष्यासि क्षान्तिनिर्यातः प्रज्ञापारमिताचरितः उपायकौशल्यगतिं गतः ॥

तत्र भिक्षवो बोधिसत्त्वो महोपायकौशल्यविक्रीडितेन सर्वान्तःपुरस्य यथाधिमुक्त्या
20 ईर्यापथमुपदर्श्य, पौर्विकाणां च बोधिसत्त्वानां लोकविषयसमतिक्रान्तानां लोकानुवर्तनक्रिया-
R 216 धर्मतामनुवर्त्य, दीर्घरात्रं सुविदितकामदोषः सत्त्वपरिपाकवशादकामात्कामोपभोगं संदर्श्य, अपरिमितकुशलमूलोपचयपुण्यसंभारबलविशेषणासदृशीं लोकाधिपतेयतां संदर्श्य, देवमनुष्यातिक्रान्तं सारोदारविविधविचित्ररूपशब्दगन्धरसस्पर्शपरमरतिरमणीयं कामरतिसौख्यमुपदर्श्य,
L 180 सर्वकामरतिस्वविषयेष्वपर्यन्तत्वात् स्वचित्तवशवर्तितां संदर्श्य, पूर्वप्रणिधानबलसहायकुशल
25 मूलोपचितान् सत्त्वान् समानसंवासतया परिपाच्य, सर्वलोकसंक्लेशमलासंक्लिष्टचित्ततयान्तःपुरमध्यगतो यथाभिनिमन्त्रितस्य सत्त्वधातोः परिपाककालमवेक्षमाणो भूयस्या मात्रया बोधिसत्त्वस्तस्मिन् समये पूर्वप्रतिज्ञामनुस्मरति स्म, बुद्धधर्मांश्चामुखीकरोति स्म, प्रणिधानबलं चाभिनिर्हरति स्म। सत्त्वेषु च महाकरुणामवक्रामति स्म। सत्त्वप्रमोक्षं च चिन्तयति स्म। सर्वगतो विपत्तिपर्यवसाना इति प्रत्यवेक्षते स्म। अनेकोपद्रवभयबहुलं च संसारमुपपरीक्षते

१ R °तमावृते for °तमोवृते २ R निरञ्जनं for निरञ्जनम् ३ श्रुत्वमिदं for श्रुत्व मिदं ४ R प्रेषेति for प्रेषी ५ R °पर्येष्ट्यतृप्तो for पर्येष्ट्यवृत्तो ६ R °कौशल्येन for °कौशल्य. ७ R यथा विमुक्त्या for °धिमुक्त्या ८ R °ईर्यापथ° for ईर्या°. ९ R °दकामादकामोप° for °दकामात्कामोप°. १० L °सदृशीं for °सदृशी ११ R °विषयतां for °विषयेषु १२ R om °स्व° १३ R परिपाच्य for °पाच्य १४ R °संक्लेशमलासंक्लिष्ट° for °संक्लेश°. १५ R यथाभिनन्दितस्य for °यथाभिनिमन्त्रितस्य

स्म। मारकरिपाशांश्च संछिनत्ति स्म। संसारप्रबन्धाच्चात्मानमुच्चारयति[1] स्म। निर्वाणे च चित्तं संप्रेषयति स्म॥

तत्र भिक्षवो बोधिसत्त्वः पूर्वान्तत एव सुविदितसंसारदोषः संस्कृतेनाप्याशयेनानर्थिकः सर्वोपादानपरिग्रहैरनर्थिको बुद्धधर्मनिर्वाणाभिमुखः संसारपराङ्मुखस्तथागतगोचराभिरतो मारविषय[2]गोचरानसृष्ट आदीप्तभवदोषदर्शी त्रैधातुकान्निःशरणाभिप्रायः संसारदोषादीनव[3] 5
निःसरणकुशलः प्रव्रज्याभिलाषी निष्क्रमणाभिप्रायो विवेकनिम्नो विवेकप्रवणो[4] विवेकप्राग्भार　　R 217
आरण्यप्रारण्याभिमुखः प्रविवेकप्रशमाभिकाङ्क्षी आत्मपरहितप्रतिपन्नः अनुत्तरप्रतिपत्तिशूरो लोकस्यार्थकामो हितकामः सुखकामो योगक्षेमकामो लोकानुकम्पको हितैषी मैत्रीविहारी महाकारुणिकः संग्रहवस्तुकुशलः सततसमित[5]मपरिखिन्न[6]मानसः सत्त्वपरिपाकविनयकुशलः सर्वसत्त्वेष्वेकपुत्रकप्रेमानुगतमनसिकारः सर्ववस्तुनिरपेक्षपरित्यागी दानसंविभागरतः प्रयुक्तत्यागः 10
प्रयत[7]पाणिः त्यागशूरो यष्टयज्ञः सुसमृद्धपुण्यः सुसंगृहीतपुण्यः परिष्कारनिर्गत　　L 181
मलामात्सर्य[8]सुनिगृहीतचित्तोऽनुत्तरो महादानपतिर्दत्त्वा च विपाकाप्रतिकाङ्क्षी प्रदानशूर इच्छामहेच्छालोभद्वेष[9]मदमानमोहमात्सर्यप्रमुखसर्वारिक्लेशगणप्रत्यर्थिकनिग्रहायाभ्युत्थितः सर्वज्ञताचित्तोत्पादप्रबन्धाचलितः[10] महात्यागचित्तसंनाहसुसंनद्धः लोकानुकम्पको हितैषी वर्मितः अवचि[11]तवीर्यः[11] -
सत्त्वप्रमोक्षालम्बनमहाकरुणानलविक्रमपराक्रम[12] अवैवर्तिकसर्वसत्त्वसमचित्तत्यागप्रहरणो यथाभिप्राय- 15
सत्त्वाशयसंतोषणो बोधिभाजनीभूतः कालाक्षुण्णधर्मविधी बोधिपरिणामप्रणिधिः अवन[13]नामितध्वजज्वलितमण्डलपरिशोधनदानपरित्यागी ज्ञानवरवज्रदृढप्रहरणः सुनिगृहीतक्लेशप्रत्यर्थिकः शीलगुण- चारित्रप्रतिपन्नः स्वारक्षित[14]कायवाङ्मनस्कर्मान्तोऽणुमात्रावद्यभयदर्शी सुपरिशुद्धशीलः[15] अमलविमल- निर्मलचित्तः सर्वदुरुक्तदुरागतवचनपथाक्रोशपरिभाषणकुत्सनताडनतर्जनवधबन्धनावरोधनपरि- क्लेशालुडितचित्तोऽक्षुभितचित्तः क्षान्तिसौरभ्यसंपन्नः अक्षतोऽनुपहतोऽव्यापन्नचित्तः सर्वसत्त्व- 20
हितार्थायोत्तप्तवीर्यारम्भी दृढसमादानसर्वकुशलमूलधर्मसमुदानयनाप्रत्युदावर्त्यस्मृतिमान् सुसंप्रज्ञः सुसमाहितोऽविक्षिप्तचित्तो ध्यानैकाग्रमनसिकारो धर्मप्रविचयकुशलो लब्धालोको विगततमोऽन्धकार　　R 218
अनित्यदुःखानात्माशुभाकारपरिभावितचेताः स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गार्य- सत्यसर्वबोधिपक्षधर्मसुपरिकर्मकृतमनसिकारः शमथविपश्यनासुपर्यवदातबुद्धिः प्रतीत्यसमुत्पाद- सत्यदर्शी सत्यानुबोधादपरप्रत्ययस्त्रिविमोक्षसुखविक्रीडितो मायामरीचिस्वप्नोदकचन्द्रप्रतिश्रुत्का[16]प्रति- 25
भासोपमसर्वधर्मनयावतीर्णः॥

इति हि भिक्षवो बोधिसत्त्वस्यैव भवति प्रकृतिरेव[17] — एवं धर्मविहारी एवं गुणमाहात्म्यविहारी　　L 182
एवं सत्त्वार्थाभियुक्तविहारी अभूत्। भूयस्या मात्रया आभिर्दशदिग्बुद्धाधिष्ठानतूर्यसंगीतिविनिःसृताभिर्गाथाभिः[18] संचोदितः स तस्यां वेलायां पूर्वेषां च बोधिसत्त्वानां चरमभवोपगतानां

१ R उच्चालयति for उच्चारयति　२ R मारविषये for °विषय°　३ R °दोषादेरव for °दोषादीनव°　४ R विवेकप्रचरणो for °प्रवण　५ R सततशमितो for °समित°　६ R अपरिच्छिन्न° for °खिन्न°　७ R प्रनत° for प्रयत°　८ R विगतमदमात्सर्य° for °विगतमलामात्स°　९ R °दोष° for °द्वेष°　१० R प्रबन्धाच्चरित for °न्धाचलित　११ R om °वीर्य°　१२ R om °पराक्रम°　१३ R अनव° for अव°　१४ R सुलक्षित° for स्वारक्षित°　१५ R शुद्धसुपरि° for सुपरि°　१६ R° शुल्क° for °श्रुत्का°　१७ R प्रतिकृत्यैव for प्रकृतिरेव　१८ R om °गाथाभिः

मन्तःपुरपरिपाचितानि चत्वारि धर्ममुखान्यामुखीकरोति स्म । कतमानि चत्वारि ? यदिदं दानं प्रियवचनमर्थक्रियां समानार्थतां च । चतुःसंग्रहवस्तुप्रयोगनिर्हारविशुद्धिं च नाम धर्ममुखमामुखीकरोति स्म । त्रिरत्नवंशसाधारणाभिप्रायो त्रिप्रणाशसर्वज्ञताचित्तप्रणिधानबलाधानावैवर्त्यविषयं च नाम धर्ममुखमामुखीकरोति स्म । सर्वसत्त्वापरित्यागाध्याशयमहाकरुणावतारतां च नाम धर्ममुखमामुखीकरोति स्म । सर्वबोधिपक्षधर्मपदे प्रभेदार्थाभिनिश्चयज्ञानसंसारबलविशेषसमुदानयमहाव्यूहं च नाम धर्ममुखमामुखीकरोति स्म । इमानि चत्वारि धर्ममुखान्यामुखीकृत्य बोधिसत्त्वः सर्वस्यान्तःपुरस्य परिपाचनार्थं तस्यां वेलायां तथारूपमृद्ध्यभिसंस्कारमभिसंस्करोति स्म, यथारूपेण ऋद्ध्यभिसंस्कारेणाभिसंस्कृतेन तेभ्यः संगीतिरुतेभ्यो बोधिसत्त्वानुभावेनेमान्येवंरूपाणि धर्ममुखशतसहस्राणि निश्चरन्ति स्म । तद्यथा—

उदारछन्देन च आशयेन
अध्याशयेना करुणाय प्राणिषु ।
उत्पद्यते चित्तु वराग्रबोधये
शब्दे च रूपस्तुरियेभि निश्चरी ॥ १३३ ॥

श्रद्धा प्रसादो अधिमुक्ति गौरवं
निर्मानता ओनमना गुरूणाम् ।
परिपृच्छना किंकुशलंगवेषणा
अनुस्मृतीभावतु शब्द निश्चरी ॥ १३४ ॥

दाने दमे संयमशीलशब्दः
क्षान्तीय शब्दस्तथ वीर्यशब्दः ।
ध्यानाभिनिर्हारसमाधिशब्दः
प्रज्ञा उपायस्य च शब्द निश्चरी ॥ १३५ ॥

मैत्राय शब्दः करुणाय शब्दो
मुदिताउपेक्षाय अभिज्ञशब्दः ।
चतुसंग्रहावस्तुविनिश्चयेन
सत्वान परिपाचनशब्द निश्चरी ॥ १३६ ॥

स्मृतेरुपस्थानप्रभेदशब्दः
सम्यक्प्रहाणास्तथ ऋद्धिपादा ।
पञ्चेन्द्रिया पञ्चबलप्रभेदा
बोध्यङ्गशब्दस्तुरियेभि निश्चरी ॥ १३७ ॥

१ R °क्रिया for °क्रियां. २ R °र्थंना for °र्थतां. ३ R °धानावर्तीविषयं for °धानावैवर्त्यविषयं. ४ R °ध्याम° for °ध्याशय°. ५ R क्षान्त्याथ for क्षान्तीय.

अष्टाङ्गिको मार्गवलप्रभेदः
शमथस्य शब्दोऽथ विपश्यनायाः।
अनित्यदुःखार्तिअनात्मशब्दः
अशुभार्तिशब्दो तुरियेभि निश्चरी ॥ १३८ ॥
विरागशब्दश्च विवेकशब्दः
क्षयज्ञानशब्दो अनुत्पादशब्दः।
अनिरोधशब्दश्च अनाळयं च
निर्वाणशब्दस्तुरियेभि निश्चरी ॥ १३९ ॥
इम एवरूपास्तुरियेभि शब्दाः
संबोधिशब्दैश्चनुभाव निश्चरी।
यं श्रुत्व सर्वा प्रमदा नु शिक्षिता
वराग्रसत्त्वे प्रणिधेन्ति बोधये ॥ १४० ॥

इति हि भिक्षवो अन्तःपुरमध्यगतेन बोधिसत्त्वेन तानि चतुरशीतिस्त्रीसहस्राणि परिपाचितान्यभूवन् अनुत्तरायां सम्यक्संबोधौ बहूनि च देवताशतसहस्राणि ये तत्र संप्राप्ता अभूवन् ॥

तथा अभिनिष्क्रमणकाले तस्मिन् समये बोधिसत्त्वस्य ह्रीदेवो नाम तुषितकायिको देवपुत्रोऽनुत्तरायाः सम्यक्संबोधेः स रात्रौ प्रशान्तायां द्वात्रिंशता देवपुत्रसहस्रैः परिवृतः पुरस्कृतो येन बोधिसत्त्वस्योपस्थानप्रासादस्तेनोपसंक्रामत्। उपसंक्रम्य गगनतलगत एव बोधिसत्त्वं गाथाभिरध्यभाषत –

च्युति दर्शिता अतियशा जन्म च संदर्शितं पुरुषसिंह।
अन्तःपुरं विदर्शितु कृतानुवृत्तिस्त्वया लोके ॥ १४१ ॥
परिपाचिता ति बहवो देव मनुज लोकि धर्ममनुप्राप्य।
अयमद्य कालसमयो निष्क्रम्ये मति विचिन्तेहि ॥ १४२ ॥
न हि बद्ध मोचयाती न चान्धपुरुषेन दर्शियति मार्गः।
मुक्तस्तु मोचयाती सचक्षुषा दर्शयति मार्गः ॥ १४३ ॥
ये सत्त्व कामदासा गृहे धने पुत्रभार्यपरिश्रद्धाः।
ते तुभ्य शिष्यमाणा नैष्क्रम्यमतौ स्पृहां कुर्युः ॥ १४४ ॥
ऐश्वर्य कामक्रीडा चतुद्वीपा सप्त रत्न विजहित्वा।
निष्क्रान्त त्वां विदित्वा स्पृहयेत्सनरामरो लोकः ॥ १४५ ॥
किं चापि ध्यानसौख्यैर्विहरसि धर्मैर्न चासि कामरतः।
अथ पुन चिरप्रसुप्तां बोधय मरुमानुषशतानि ॥ १४६ ॥

१ L शब्दः for शब्दाः २ R °शब्दस्तु° for °शब्दश्चनु°. ३ R देवगत° for देवताशत°. ४ R निष्क्रम्येति for निष्क्रम्ये मति. ५ R मार्गम् for मार्गः. ६ R °परिशुद्धाः for °श्रद्धाः. ७ R शिक्षमाणा for शिष्य°.

अतिपतति यौवनमिदं गिरिनदि यथ चञ्चलप्रचलवेगा ।
गतयौवनस्य भवतो नैष्क्रम्यमतिर्न शोभेते ॥ १४७ ॥
R 222 तत्साधु तरुणरूपे प्रथमे वरयौवनेऽभिनिष्क्रम्य ।
उत्तारय प्रतिज्ञां कुरुष्व चार्थं सुरगणानाम् ॥ १४८ ॥
5 न च कामगुणरतीभिस्तृप्तिर्लवणोदधेर्यथाम्भोभिः ।
ते तृप्त येष प्रज्ञा आर्या लोकोत्तरा विरजा ॥ १४९ ॥
त्वमिह प्रियो मनापो राज्ञः शुद्धोदनस्य राष्ट्रस्य ।
शतपत्रसदृशवदना नैष्क्रम्यमतिं विचिन्तेहि ॥ १५० ॥
आदीप्तं क्लेशतापैरनिःशरणैर्गाढबन्धनैर्बद्धां ।
10 शीघ्रं प्रमोक्षमार्गे स्थापय शान्ते असमवीरा ॥ १५१ ॥
त्वं वैद्य धातुकुशलश्चिरातुरां सत्त्वरोगसंस्पृष्टां ।
भैषज्यधर्मयोगैर्निर्वाणसुखे स्थपय शीघ्रम् ॥ १५२ ॥
L 185 अन्धातमा अनयना मोहाकुलदृष्टिजालबद्धाः ।
प्रज्ञाप्रदीपचक्षुः शोधय शीघ्रं नरमरूणाम् ॥ १५३ ॥
15 समुदीक्षन्ते बहवो देवासुरनागयक्षगन्धर्वाः ।
द्रक्ष्याम बोधिप्राप्तं निरुत्तरं धर्म श्रोष्यामः ॥ १५४ ॥
द्रक्ष्यति च भुजगराजो भवनं अवभासितं तव शिरीये ।
R 223 करिष्यति अनन्तपूजा पूरेहि व्रताशयस्तस्य ॥ १५५ ॥
चत्वारि लोकपालाः ससैन्यकास्ते तव प्रदीक्षन्ते ।
20 दास्याम चतुरि पात्रां बोधिध्वजि पूर्णमनसस्य ॥ १५६ ॥
ब्रह्मा प्रशान्तचारी उदीक्षते मैत्रकरुणलाभी ।
अध्येषिष्ये नरेन्द्रं वर्तेन्ति निरुत्तरं चक्रम् ॥ १५७ ॥
बोधिपरिपाचिकापि च देवत अभियुक्त बोधिमण्डस्मिं ।
उत्पत्स्यतेऽयं सत्त्वं ति द्रक्ष्याम्यभिबुध्यतो बोधिम् ॥ १५८ ॥
25 सर्वं हि बोधिसत्त्वा अन्तःपुरिये क्रिया विदर्शेन्ति ।
पूर्वंगमो भव त्वं मा भेष्यसि पश्चिमस्तेषाम् ॥ १५९ ॥
मञ्जुरुत मञ्जुघोषा स्मराहि दीपंकरस्य व्याकरणम् ।
भूतं तथा अवितथा जिनघोषरुतं उदीरेहि ॥ १६० ॥

इति श्रीललितविस्तरे संचोदनापरिवर्तो नाम त्रयोदशोऽध्यायः ॥

---

१ R प्रचर° for प्रचल°. २ R तत्साधु for तत्साधु तरुणरूपे. ३ R आदीप्तां for आदीप्त. ४ R [illegible] for [illegible]. ५ R ब्रह्मा for ब्रह्म. ६ R अभियुक्तु for अभियुक्त. ७ R om. सत्त्व ति. ८ R विदर्शन्ति for दर्शति. ९ R भेष्यसि for भेष्यसि.

# १४

## स्वप्नपरिवर्तश्चतुर्दशः ।

इति हि भिक्षवो बोधिसत्त्वः संचोदितः सन् तेन देवपुत्रेण राज्ञः शुद्धोदनस्येमं स्वप्नमुपदर्शयति स्म—यद्राजा शुद्धोदनः सुप्तः स्वप्नान्तरगतोऽद्राक्षीत् बोधिसत्त्वं रात्रौ प्रशान्तायामभिनिष्क्रमन्तं देवगणपरिवृतम्। अभिनिष्क्रम्य प्रव्रजितं चाद्राक्षीत् काषायवस्त्रप्रावृतम्। स प्रतिबुद्धः त्वरितं त्वरितं काञ्चुकीयं परिपृच्छति स्म—कश्चित् कुमारोऽन्तःपुरेऽस्ति? सोऽवोचत्—अस्ति देवेति ॥ R 224 L 186 5

ततो राज्ञः शुद्धोदनस्यान्तःपुरे शोकशल्यो हृदयेऽनुप्रविष्टोऽभूत्—अभिनिष्क्रमिष्यति अवश्यं कुमारोऽयम्। यथेमानि पूर्वनिमित्तानि संदृश्यन्ते स्म ॥

तस्यैतदभवत्—न खल्वन्ययं कुमारेण कदाचिदुद्यानभूमिमभिनिर्गन्तव्यम्। स्त्रीगणमध्येऽभिरतः इहैव रंस्यते, नाभिनिष्क्रमिष्यतीति ॥

ततो राज्ञा शुद्धोदनेन कुमारस्य परिभोगार्थं त्रयो यथर्तुकाः प्रासादाः कारिता अभूवन् 10 ग्रैष्मिको वार्षिको हैमन्तिकश्च। तत्र यो ग्रैष्मिकः स एकान्तशीतलः। यो वार्षिकः स साधारणः। यो हैमन्तिकः स स्वभावोष्णः। एकैकस्य च प्रासादस्य सोपानानि पञ्च पञ्च पुरुषशतान्युत्क्षिपन्ति स्म, निक्षिपन्ति स्म। तेषां तथोत्क्षिप्यमाणानां निक्षिप्यमाणानां च शब्दोऽर्धयोजने श्रूयते स्म—मा खलु कुमारोऽनभिज्ञात एवाभिनिष्क्रमिष्यतीति। नैमित्तिकैर्वैपञ्चिकैश्च व्याकृतमभूत्— R 225 मङ्गलद्वारेण कुमारोऽभिनिष्क्रमिष्यतीति। ततो राजा मङ्गलद्वारस्य महान्ति कपाटानि कारयति 15 स्म। एकैकं च कपाटं पञ्च पञ्च पुरुषशतान्युद्घाटयन्ति स्म, अपघाटयन्ति स्म। तेषां चार्धयोजनं शब्दो गच्छति स्म। पञ्च चास्य कामगुणान् सदृशानुपसंहरति स्म। गीतवादितनृत्यैश्चैनं सदैव सुखयन्ति स्म ॥

अथ भिक्षवो बोधिसत्त्वः सारथिं प्राह—शीघ्रं सारथे रथं योजय। उद्यानभूमिं गमिष्यामीति। ततः सारथी राजानं शुद्धोदनमुपसंक्रम्यैवमाह—देव कुमार उद्यानभूमिमभिनिर्यास्यतीति ॥ 20 L 187

अथ राज्ञः शुद्धोदनस्यैतदभवत्—न कदाचिन्मया कुमार उद्यानभूमिमभिनिष्क्रमितः सुभूमिदर्शनाय। यन्न्वहं कुमारमुद्यानभूमिमभिनिष्क्रामयेयम्। ततः कुमारः स्त्रीगणपरिवृतो रतिं वेत्स्यते, नाभिनिष्क्रमिष्यतीति ॥

ततो राजा शुद्धोदनः स्नेहबहुमानाभ्यां बोधिसत्त्वस्य नगरे घण्टावघोषणां कारयति स्म—सप्तमे दिवसे कुमार उद्यानभूमिं निष्क्रमिष्यतीति (सुभूमिदर्शनाय)। तत्र भवद्भिः सर्वा- 25 मनापानि चापनयितव्यानि—मा कुमारः प्रतिकूलं पश्येत्। सर्वमनापानि चोपसंहर्तव्यानि विषयाभिरम्याणि ॥

---

१ R त्वरित once. २ R अस्ति मे for कश्चित्. ३ R इति for अस्ति. ४ E यंचे° for यचे°. ५ R खल्वायनेन for खल्वन्ययं. ६ R °भूमिरभिगन्तव्या for °भूमिमभिनिर्गन्तव्यम्. ७ R रमस्वाभि° for रंस्यते, नाभि°. ८ L स्वभावउष्णः ९ R अभिज्ञातः for अनभि°. १० R °निष्क्रमत्विति for °निष्क्रमिष्यतीति. ११ R वैपञ्चमिकैः for वैपञ्चिकैः. १२ R °वादित्र° for वादित. १३. R योन्वहं for यन्न्वहं.

उपगम्य बोधिविटु गृह्य कृताञ्जलीभिः
शक्रोभिलग्न मणिरत्न क्षिपन्ति चित्रा ॥ १९ ॥

R 372

के चागताश्चतुदिशा च यथैव पाला
गन्धर्वराक्षसपरीवृत किन्नरेभिः ।
विद्युत्स्फुटान्त कुसुमानि प्रवर्षमाणाः
5
गन्धर्वकिन्नररुतेन स्तुवन्ति वीरम् ॥ २० ॥

के चागताः कुसुमितां प्रगृहीत्व वृक्षान्
सफलां सपुष्पवरगन्ध प्रमुञ्चमानां ।
L 298
जातेषु तेषु स्थित बुद्ध शुद्धकायाः
10
अवलम्बमान प्रतिमण्डि क्षिपन्ति पुष्पा ॥ २१ ॥

के चागताः कुसुमिताः पुंडिनी गृहीत्वा
पद्मोत्पलैः कुसुमितैस्तथ पुण्डरीकैः ।
द्वात्रिंशलक्षणधराः स्थित पद्मगर्भे
स्तविष्ट अलिप्तमनसं विदु बोधिसत्त्वम् ॥ २२ ॥

R 373 · 15
के चागता विपुलकाय तथैव मेरु
स्थित्वान्तरीक्ष स्वकमात्मनमुत्सृजन्ति ।
उत्सृज्यमात्र भविया नवपुष्पदामाः
संछादयन्ति त्रिसहस्रि जिनस्य क्षेत्रम् ॥ २३ ॥

के चागता उभयचक्षुषि कल्पदाहं
संदर्शयन्त विभवं तथ संभवं च ।
20
तेषां शरीरि बहुधर्मसुखा रणन्ति
तां श्रुत्व सत्त्वनयुता प्रजहन्ति तृष्णाम् ॥ २४ ॥

के चागता रतिकिन्नरतुल्यघोषाः
बिम्बोष्ठचारुवदनाः परिपूर्णवक्त्राः ।
कन्या यथैव सुअलंकृत चित्रहाराः
25
प्रेक्षन्त या सुरगणा न लभन्ति तृप्तिम् ॥ २५ ॥

के चागता वजिरकाय इवा अभेद्या
हेष्ट्रा पर्यंकबन्धचरणैः प्रतिमाह्वमाणाः ।

---

१ R बोधिविटपं प्रगृह्य for बोधिवटु गृह्य. २ R शक्रोभि° for शक्रभि°. ३ R °मण्डित for °मण्डि ४ R पद्मिनीः for पुंडिनी. ५ R संदर्शयन्ति. ६ R °मुख for °सुखा. ७ R रचित° for रति°. ८ R यथेह for यथैव. ९ R अलंकृत for सुअलं°. १० R प्रस्तम्भ for पर्यंक°.

के चागता रविरिवा शशिपूर्णवक्त्राः
ज्योत्स्नाकराः प्रभकरा हतक्लेशदोषाः ॥ २६ ॥

के चागता रतनमण्डित रत्नपाणी R 374 L 299
संछादयित्व बहुक्षेत्रसहस्रकोट्यः ।
वर्षन्ति रत्नवर पुष्प सुगन्धगन्धा 5
संतोषणार्थ बहुसत्त्वहितं सुखार्थम् ॥ २७ ॥

के चागता महति धारणि रत्नकोशाः
रोमेभि सूत्रनयुतानि प्रभाषमाणाः ।
प्रतिभानवन्त मतिमन्त सुबुद्धिवन्तो
मत्तप्रमत्तजनतां प्रतिबोधयन्तः ॥ २८ ॥ 10

के चागता प्रहिय भेरि यथैव मेरु
आकोट्यमानु गगने सुमनोज्ञघोषाम् ।
यस्या रवं दशदिशो व्रजि क्षेत्रकोट्या
अद्यावबोद्धुममृतं अनुबुद्धि शान्ता ॥ २९ ॥ इति ॥

॥ इति श्रीललितविस्तरे बोधिमण्डव्यूहपरिवर्तो नाम विंशतितमोऽध्यायः ॥ 15

## मारधर्षणपरिवर्तो एकविंशः ।

R 375 इति हि भिक्षवो बोधिसत्त्वैश्चेमे एवंरूपा व्यूहा बोधिसत्त्वस्य पूजाकर्मणे बोधिमण्डेऽभि-संस्कृता अभूवन् । स्वयं च बोधिसत्त्वो यावन्तो दशसु दिक्ष्वतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां सर्वबुद्धक्षेत्रेषु बोधिमण्डालंकारव्यूहास्तान् सर्वांस्तस्मिन् बोधिमण्डे संदर्शयति स्म ॥

5 अथ खलु भिक्षवो बोधिमण्डनिषण्णस्य बोधिसत्त्वस्यैतदभवत् — इह खलु कामधातौ L 300 मारः पापीयानधिपतिरीश्वरो वशवर्ती । नैतन्मम प्रतिरूपं भवेद्यदहं तेनाविदितोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येयम् । यन्न्वहं मारस्य पापीयसः संचोदनं कुर्याम् । तस्मिन् विजिते सर्वे कामावचरा देवादयो निगृहीता भविष्यन्ति । ततश्च मारपर्षदः पूर्वावरोपितकुशलमूला मारकायिका देवपुत्रास्ते मम सिंहविक्रीडितं दृष्ट्वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयिष्यन्ति ॥

10 अथ खलु भिक्षवो बोधिसत्त्व एवमनुविचिन्त्य तस्यां वेलायां भ्रूविवरान्तरादूर्णा-कोशात् सर्वमारमण्डलविध्वंसनकरीं नामैकां रश्मिमुदसृजत् । यया रश्म्या सर्वस्मिंस्त्रि-साहस्रमहासाहस्रलोकधातौ सर्वमारभवनान्यवभास्य जिह्मीकृतानि संप्रकम्पितानि चाभूवन् । सर्वश्चायं त्रिसाहस्रमहासाहस्रलोकधातुर्महतावभासेन स्फुटोऽभूत् । तस्याश्च प्रभाया मारः पापीयानिदमेवं रूपं शब्दमश्रौषीत् —

R 376 15 कल्पौघचीर्णचरितो ह्यतिशुद्धसत्त्वः
शुद्धोदनस्य तनयः प्रविजह्य राज्यम् ।
सो निर्गतो हितकरो ह्यमृताभिलाषी
बोधिद्रुमं ह्युपगतोऽद्य कुरु प्रयत्नम् ॥ १ ॥
सो तीर्ण आत्मन परानपि तारयेया
20 मोचेष्यते स च परा स्वयमेव मुक्तः ।
आश्वासप्राप्त स परानपि चाश्वसेया
निर्वापयिष्यति परा परिनिर्वृतश्च ॥ २ ॥
शून्यां करिष्यति अपायत्रयोऽप्यशेषां
पूर्णां करिष्यति पुरां सुरमानुषाणाम् ।
L 301 25 ध्यानानभिज्ञ परमं अमृतं सुखं च
दास्यत्यसौ हितकरो अमृतं स्पृशित्वा ॥ ३ ॥
शून्यं करिष्यति पुरं तव कृष्णबन्धो
अबलो बलो बलविहीनु अपक्षपक्षो ।

---

१ R °धैराय्या for °श्चेम एवरूपा. २ R om. बुद्धानां. ३ R संचोदनां. ४ R दक्षश्च for तस्य°. ५ R ह्यतिशुद्ध° for ह्यभिशुद्ध°. ६ R सोत्तीर्ण for सो तीर्ण. ७ R तारयिष्ये for तारयेया. ८ R पुरी for पुरां. ९ R अबलाबलो for अबलो बलो १० R अपक्षपक्षो for अपक्ष°.

न ज्ञास्यसे क नु भंजामि करोमि किं वा
यद् धर्मवर्षमभिवर्षि स्वयं स्वयंभूः ॥ ४ ॥ इति ॥

इति हि भिक्षवो मारः पापीयानाभिः संचोदनाभिर्गाथाभिः संचोदितः सन् द्वात्रिंशदाकारं स्वप्नमपश्यत् । कतमद् द्वात्रिंशदाकारम् ? तद्यथा—तमसाकुलं च स्वभवनमपश्यत् । रजसाकुलं चाकीर्णशर्करैकठल्यं[2] च स्वभवनमपश्यत् । भीतत्रस्तोद्विग्नं दिशो दश प्रपलायमानं चात्मानमपश्यत् । विभ्रष्टमुकुटमपविद्धकुण्डलं चात्मानमपश्यत् । शुष्कोष्ठगलताल्वकं चात्मानमपश्यत् । संतप्तहृदयं चात्मानमपश्यत् । शीर्णपत्रपुष्पफलानि चोद्यानान्यपश्यत् । अपगतजलाः परिशुष्काश्च पुष्करिणीरपश्यत् । हंसक्रौञ्चमयूरकलविङ्ककुणालजीवंजीवकादींश्च पक्षिगणाञ्छीर्णपक्षानपश्यत् । भेरीशङ्खमृदङ्गपटहतुणववीणावल्लकीताडसम्पादींश्च वाद्यभाण्डांश्छिन्नविछिन्नान् भूमौ निपतितानपश्यत् । प्रियजनपरिवाराश्च मारमुत्सृज्य दीनमुखा एकान्ते गत्वा प्रध्यायन्तमपश्यत् । अग्रमहिषीं च मारिणीं[3] शयनभ्रष्टां धरण्यामुभाभ्यां पाणिभ्यां शीर्षमभिपीडयन्तीमपश्यत् । ये च ते मारपुत्रा वीर्यवत्तमाश्च बलवत्तमाश्च तेजवत्तमाश्च प्रज्ञावत्तमाश्च[4] तं बोधिसत्त्वं बोधिमण्डवराग्रगतं नमस्यन्त एवमपश्यत् । आत्मनीयाश्च दुहितॄर्हा तात हा तातेति क्रन्दन्त्योऽपश्यत् । मलिनचैलगात्रं चात्मानमपश्यत् । अवकीर्णपांशुशिरस्कं च पाण्डुदुर्वर्ण[5]मोजोपहृतं चात्मानमपश्यत् । हर्म्यकूटागारगवाक्षतोरणांश्च रजसावकीर्णान् पततोऽपश्यत् । ये चास्य ते सेनापतयो यक्षराक्षसकुम्भाण्डगन्धर्वाधिपतयः, तान् सर्वान् हस्ताञ्शिरसि कृत्वा रोदन्तः क्रन्दन्तः[6] पलायमानांश्चापश्यत् । ये च ते कामावचरेषु देवेषु[7] देवाधिपतयः, तद्यथा— धृतराष्ट्रविरूढकविरूपाक्षवैश्रवण[8]शक्रसुयामसंतुषितसुनिर्मितवशवर्तिप्रभृतयः, तान् सर्वाञ्शुश्रूषमाणान् मारः पापीयान् सबोधिसत्त्वाभिमुखानपश्यत् । रणमध्ये चास्यासिर्विकोशो न भवति स्म । विक्रोशन्तमशिवं चात्मानमपश्यत् । स्वेन च परिवारेणात्मानं परित्यक्तमपश्यत् । मङ्गलपूर्णकुम्भांश्च पतितान् द्वारेऽपश्यत्[9] । नारदं च ब्राह्मणममङ्गल्य[10]शब्दं श्रावयन्तमपश्यत् । आनन्दितं च दौवारिकमनानन्द[11]शब्दं श्रावयन्तमपश्यत् । तमसाकुलं च गगनतलमपश्यत् । कामभवननिवासिनीं च श्रियं रुदन्तीमपश्यत् । स्वैश्वर्यं[12] चानैश्वर्यम[13]पश्यत् । स्वपक्षं चापक्षमपश्यत् । मणिमुक्ताजालानि च तूष्णीभूतानि[14] छिन्नभिन्नपतितान्यपश्यत्[15] । सर्वं च मारभवनं प्रचलितमपश्यत् । वृक्षाञ्छिद्यमानान्निर्यूहांश्च पततोऽद्राक्षीत् । सर्वं च मारसेनाव्यूहमभिमुखं पात्यमानमपश्यत् ॥

R 377 · 5 · 10 · L 302 · R 378 · 20 · 25

इति हि भिक्षव एवं द्वात्रिंशदाकारं मारः पापीयान् स्वप्नमपश्यत् । स प्रतिबुद्धः सन् भीतस्त्रस्तः संविग्नः सर्वमन्तर्जनं संनिपात्य सबलपार्षद्यसेनापतिदौवारिकसंनिपतितांश्च तान् विदित्वा आभिर्गाथाभिरध्यभाषत्—

१ R भजासि करोषि for भजामि करोमि. २ R शर्कराकठिल for शर्करकठल्य. ३ R मालिनी for मारिणीं. ४ R om प्रज्ञावत्तमाश्च. ५ R °दुर्वर्ण° for °दुर्बल°. ६ R रुदतः क्रन्दतः for रोदन्तः क्रन्दन्तः. ७ R om. देवेषु. ८ R °वैश्रमण° for °वैश्रवण°. ९ R द्वारपतितान् for पतितान् द्वारे. १० माङ्गल्य° for अमङ्गल्य°. ११ R अनानन्दं for अनानन्द°. १२ R स्वानैश्वर्यं for स्वैश°. १३ R चैश्वर्यनष्टान् for चानैश्वर्यम्. १४ R कुण्ठीभूतानि for तूष्णी°. १५ R छिन्नविच्छिन्नानि भूमौ पति° for छिन्नभिन्नपति°.

दृष्ट्वान तां स सुपिनां नमुची दुखार्तो
R 379 आमन्त्रयाति सुत येऽपि च पारिषद्या।
L 303 सेनापतिं नमुचि सिंहहनुश्च नाम्ना
सर्वेष तेष परिपृच्छति कृष्णबन्धुः ॥ ५ ॥

गाथाभि गीतरचितोऽद्य श्रुतोऽन्तरीक्षा-
च्छाक्येषु जातु वरलक्षणचित्रिताङ्गः।
षड्वर्ष दुष्करव्रतानि चरित्व घोरा
बोधिद्रुमं ह्युपगतः प्रकुरुष्व यत्नम् ॥ ६ ॥

सो चेद्विबुद्ध स्वयमेव हि बोधिसत्त्वो
10 बहुसत्त्वकोटिनयुतानि विबोधयेत।
शून्यं करिष्यति स मे भवनं ह्यशेषं
यद लप्स्यते ह्यमृतु स्पर्शनशीतिभावम् ॥ ७ ॥

हन्त व्रजाम सहिता महता बलेन
घातेम तं श्रमणु एकु द्रुमेन्द्रमूले।
15 उद्योजयध्व चतुरङ्गिणि शीघ्र सेनां
यदि इच्छथा मम प्रियं म चिरं करोथ ॥ ८ ॥

R 380 प्रत्येकबुद्धभि च अर्हभि पूर्ण लोको
निर्वायमाणु न बलं मम दुर्बलं स्यात्।
सो भूयु एकु जितु मेष्यति धर्मराजो
20 गणनातिवृत्तु जिनवंशु न जातु छिद्येत् ॥ ९ ॥

अथ खलु भिक्षवः सार्थवाहो नाम मारपुत्रः स मारं पापीयांसं गाथाभिरध्यभाषत्—

किं तात भिन्नवदनोऽसि विवर्णवक्त्रो
हृदयं समुत्प्लवति वेधति तेऽङ्गमङ्गम्।
L 304 किं ते श्रुतं अथव दृष्टु भणाहि शीघ्रं
25 ज्ञास्याम तत्त्वतु विचिन्त्य तथा प्रयोगम् ॥ १० ॥

निर्माणु मारु अवची शृणु मह्य वत्स
पापं मि दृष्टु सुपिनं परमं सुघोरम्।
भाषेय सर्वमिह पर्षदि अद्य शेषं
संमूर्छिता क्षितितले प्रपतेयु यूयम् ॥ ११ ॥

---

१ R दृष्ट्वा नु for दृष्ट्वान. २ R सर्वेषु तेषु for सर्वेष तेष. ३ R °लक्षणविचित्रिताङ्गः for °चित्रिताङ्गः. ४ R सोऽप्यद्य for सो चेद्. ५ R यदीच्छ° for यदि इच्छ°. ६ R °बुद्ध अर्हति च for °बुद्धभि अर्हभि. ७ R लोके for लोको. ८ R गणनाप्यतीतु for °नातिवृत्तु. ९ R गाथयाध्य° for गाथाभिरध्य°. १० R समुत्प्लवति for समुत्प्लवति. ११ R om. ते. १२ R प्रपतेय.

सार्थवाह आह–

रणकालि प्राप्ति यदि नाम जयो न दोषः
तत्रैव यस्तु निहतो भवते न दोषः ।
स्वप्नान्तरे तु यदि ईदृश ते निमित्ता
श्रेयो उपेक्ष[1] म रणे परिमातु गच्छेत् ॥ १२ ॥

R 331

5

मारोऽब्रवीत्–

व्यवसायबुद्धि पुरुषस्य रणे प्रसिद्धि
अवलम्ब्य धैर्य सुकृतं यदि नो जयं स्यात् ।
का तस्य शक्ति मम दृष्टि सपारिषद्यं
नोत्थातु मह्य चरणे शिरसा प्रपत्तुम् ॥ १३ ॥

10

सार्थवाह आह–

विस्तीर्णमस्ति हि बलं च सुदुर्बलं च
अस्त्येक शूर बलवांश्च रणंजहश्च ।
खद्योतकैर्यदि भवेत्त्रिसहस्र पूर्णा
एको रविर्ग्रसति निष्प्रभतां करोति ॥ १४ ॥

15

अपि च ।

L 305

यस्य मानश्च मोहश्च मीमांसा च न विद्यते ।
विलोमं[2] यदि विद्वांसो नासौ शक्यश्चिकित्सितुम् ॥ १५ ॥

इति हि भिक्षवो मारः पापीयान् सार्थवाहस्य वचनमकृत्वा महतीं चतुरङ्गिनीं सेनामुद्योजयति स्म महाबलरणशौण्डां भीषणा[3] रोमहर्षणीमदृष्टाश्रुतपूर्वां देवमनुष्यैर्बहुविधमुख- 20 R 332
विकारकोटिनयुतशतसहस्रविकारप्रकारां भुजगशतसहस्रकरचरणकुटिलपरिवेष्टितशरीरां असिधनु-
शरशक्तितोमरकुठारपट्टिसभुशुण्डिमुसलदण्डपाशगदाचक्रवज्रकणयधरां[4] वरवर्मकवचवर्मितशरीरां[5]
विपरीतशिरःकरचरणनयनां ज्वलितशिरोनयनवदनां दुःसंस्थितोदरपाणिपादमुग्रतेजोवदनां
परमविकृतवदनदर्शनां विकरालविकृतदंष्ट्रां घनबहु[6]विपुलप्रलम्बजिह्वां सुण्डिककिलिञ्ज[7]सदृशजिह्वां
ज्वलनसदृशकृष्णसर्पविषपूर्णरक्तनेत्राम्[8] । केचिद्धि तत्राशीविषान् वमन्ति स्म । केचित्करतलै- 25
राशीविषान् परिगृह्य भक्षयन्ति स्म । गरुडा इव सागरादभ्युत्क्षिप्य[9] केचिन्नरमांसरुधिरकरचरण-
शिरोयकृदन्त्रपुरीषादींश्च[10] भक्षयन्ति स्म । केचिज्ज्वलितपिङ्गलकृष्णनीलरक्तकद्रुकरालविचित्र-
रूपाः । केचिद्विकृतकूपप्रज्वलितोत्पाटितविकृतकटाक्षाः । केचित्परिवृत्तज्वलितविकृतनयनाः ।

---

१ R उपेक्षण for उपेक्ष म. २ R विलोमयति for विलोम यदि ३ [illegible] भीषणिकां for भीषणां.
४ R °वज्रबाणधराम्बरचर्म° for °वज्रकणयधरां वरवर्मक°. ५ R om. °वच°. ६ R om. °बहु°.
७ R °किञ्जल्क° for °किलिञ्ज°. ८ R ते for तन. ९ R अत्युत्क्षिप्य for अभ्यु°. १० R °शिरोपकृत्त°
for शिरोयकृद.

केचिज्ज्वलितान् पर्वतान् परिगृह्य सलीलमपरेषु पर्वतेषु अभिरूढा आगच्छन्ति स्म। केचित्समूलान्
वृक्षानुत्पाट्य बोधिसत्त्वाभिमुखा अभिधावन्ति स्म। केचिदजकर्णशूर्पकर्णहस्तिकर्णलम्बकर्ण-
वराहकर्णाः। केचिद् वृककर्णाः। केचिद्दकोदरिणो दुर्बलकाया अस्थिकङ्कालसंघाटमभिनिर्माय
L 306 भग्ननासाः कुम्भोदराः करोटपादा उच्छुष्कत्वग्मांसरुधिराः छिन्नकर्णनासाकरचरणनयनोत्तमाङ्गाः।
R 383 5 केचिद्रुधिरपिपासया शिरांसि परस्परं निकृन्तन्ति स्म। केचिद्भिन्नविकृतभैरवरूक्षस्वराः
फुरुफुरुत्कारपिचुत्कारफुटुफुटुप्रक्ष्वेडितानि कुर्वन्ति स्म। केचिदाहुः— आहरत हरताभिहनत हनत
बन्धत गृह्णत छिन्दत भिन्दत मथयतोत्क्षिपत नाशयतेमं श्रमणं गौतमं सार्धं द्रुमेणेति ब्रुवन्ति
स्म। केचिद्भेरुण्डकशृगालसूकरगर्दभगोहस्त्यश्वोष्ट्रखरमहिषशशचमरखड्गशरभनानाप्रतिभयरौद्र-
विकृतवक्त्राः। केचित्सिंहव्याघ्रऋक्षवराहवानरद्वीपिबिडालच्छागलोरभ्रसर्पनकुलमत्स्यमकरशिशु-
10 मारकूर्मकाकगृध्रोलूकगरुडादिसदृशात्मभावाः। केचिद्विरूपरूपाः। केचिदेकशीर्षा द्विशीर्षा याव-
च्छतसहस्रशीर्षाः। केचिदशीर्षाः। केचिदेकभुजा यावच्छतसहस्रभुजाः। केचिदभुजाः। केचिदेक-
पादकाः। केचिद्यावच्छतसहस्रपादाः। केचिदपादकाः। केचित्कर्णमुखनासिकाक्षिनाभिस्रोतोभि-
राशीविषान्निश्चारयन्ति स्म। केचिदसिधनुःशरशक्तिपट्टिशपरशुचक्रतोमरकणयवज्रमुशुण्डिभिन्दि-
पालादीनि नानाप्रहरणानि भ्रामयन्तो नृत्यन्तो बोधिसत्त्वं संतर्जयन्ति स्म। केचिन्नराङ्गुलीश्छित्वा
15 मालागुणान् कृत्वा धारयन्ति स्म। केचिच्छिरोभिरस्थिकरङ्कशीर्षकटाहकांश्च मालागुणमिव कृत्वा
धारयन्ति स्म। केचिदाशीविषपरिवेष्टितशरीराः। केचिच्छीर्षकटाहकान् परिगृह्य हस्त्यश्वोष्ट्रगोगर्दभ-
R 384 महिषारूढाः। केचिदधःशिरस ऊर्ध्वपादाः। केचित्सूचीरोमाणः। केचिद्गोगर्दभवराहनकुलच्छागलो-
L 307 रभ्रबिडालकपिवृकशृगालरोमाणः आशीविषान् वमन्तोऽयोगुडानि निर्गिरन्तो धूमकेतू-
नुत्सृजन्तो ज्वलितताम्रलोहवर्षं प्रवर्षन्तो विद्युद्वर्षान् क्षिपन्तो वज्राशनिं प्रमुञ्चन्तस्तप्तामयो-
20 वालिकां प्रवर्षन्तः कालमेघान् संजनयन्तो वातवृष्टिमुत्पादयन्तः शरमेघवर्षानुत्सृजन्तः कालरात्रिं
दर्शयन्तो रावं संजनयन्तो बोधिसत्त्वमभिधावन्ति स्म। केचित्पाशान् भ्रामयन्तो महापर्वतान् प्रपात-
यन्तो महासागरान् क्षोभयन्तो लङ्घयन्तो महापर्वतांश्चालयन्तो मेरुं पर्वतराजं विधावन्तः पलायमाना
विक्षिपन्तोऽङ्गप्रत्यङ्गानि भ्रामयन्तः शरीराणि हसन्तो महाहास्यानि उरांसि प्रस्फोटयन्तः
उरांसि ताडयन्तः केशांसि धुन्वन्तः पीतमुखानि च नीलशरीरा ज्वलितशिरस ऊर्ध्वकेशा
25 इतस्ततो वेगेन परिधावन्तो भैरवाक्षाश्च बोधिसत्त्वं विभीषयन्ति स्म। जीर्णाः स्त्रियश्च रुदन्त्यो
बोधिसत्त्वमुपसंक्रम्यैवं वदन्ति स्म— अहो पुत्र, हा मम पुत्र, उत्तिष्ठोत्तिष्ठ, शीघ्रं प्रपलायस्व।
राक्षसरूपाः पिशाचरूपाः काणखञ्जदुर्बलाश्च प्रेताः क्षुत्क्षामाक्षा ऊर्ध्वबाहवो विकृतास्याः
क्रन्दन्तो भयमुपदर्शयन्तस्त्रासं संजनयन्तो बोधिसत्त्वस्य पुरतोऽभिधावन्ति स्म। तया चैवरूपया
R 385 मारसेनया समुदितया समन्तादशीतियोजनान्यायामेन विस्तारेण स्फुटमभूत्। यथा चैकस्य
मारस्यैवं कोटीशतानां त्रिसाहस्रपर्यापन्नानां माराणां पापीयसां सेनाभिस्तिर्यगूर्ध्वं च परिस्फुटमभूत्॥

---

१ R समूलवृक्षम् for समूलान् वृक्षान्. २ R अस्थिशकलसंघात° for अस्थिकङ्कालसंघाट°.
३ R हुंहुंकार° for फुरुफुरुत्कार°. ४ R हुलुहुलु° for फुटुफुटु°. ५ R स्थूलरोमाणः for सूची°.
६ R अभिधावन्तः for विधावन्तः.

तत्रेदमुच्यते —

यक्षकुम्भाण्डमहोरगरूपाः
राक्षसप्रेतपिशाचकरूपाः ।
यत्तक लोकि विरूप सुरौद्राः
सर्वि त निर्मित तत्र शठेभिः ॥ १६ ॥ 5

एकशिरा द्विशिरा त्रिशिराश्च
यावत्सहस्रशिरा बहुवक्त्राः ।
एकभुजा द्विभुजा त्रिभुजाश्च
यावत्सहस्रभुजा बहुभुजाः ।
एकपदा द्विपदा त्रिपदाश्च 10
यावत्सहस्रपदा बहु अन्ये ॥ १७ ॥

नीलमुखानि च पीतशरीरा L 308
पीतमुखानि च नीलशरीराः ।
अन्यमुखानि च अन्यशरीराः
एकमुपागतु किंकरसैन्यम् ॥ १८ ॥ 15

वातु प्रवायति वर्षति वर्षं R 385
विद्युसहस्रशतानि पतन्ति ।
देव गुडायति वृक्ष लुडन्ति
बोधिवटस्य न ईर्यति पत्रम् ॥ १९ ॥

वर्षति देव प्रवर्षति वर्षं 20
ओघ वहन्ति जलाकुलभूमिम् ।
ईदृश भीषणिका बहुराशी
यत्र अचेतन वृक्ष पतन्ति ॥ २० ॥

दृष्ट्व च तानतिभीषणरूपां
सर्वि विसंस्थित रूपविरूपां । 25
श्रीगुणलक्षणतेजधरस्या
चित्तु न कम्पति मेरु यथैव ॥ २१ ॥

मायसमांस्तथ स्वप्नसमांश्च
अभ्रनिभां समुदीक्षति धर्मां ।
ईदृश धर्मनयं विमृशन्तो R 387
सुस्थितु ध्यायति संस्थितु धर्मे ॥ २२ ॥

१ R यत्तु त्रिलोकि for यत्तक लोकि. २ R बहु अन्ये for बहुवक्त्राः. ३ [illegible] एवम् for एकम्, ४ R कम्पित for कम्पति.

यस्य भवेत्[1] अहं ति ममेति
माव समुच्छ्रयि तत्त्व[2]निविष्टः ।
सो विभियादबुधः[3] स्थितु ग्राहे
आत्मनि संभ्रमि गच्छ निरीक्ष्य[4] ॥ २३ ॥

5 शाक्यसुतस्तु स्वभावमभावं
धर्म प्रतीत्य समुत्थित बुद्धा ।
गगनोपमचित्तु सुयुक्तो
न भ्रमते सबलं शठ[5] दृष्ट्वा ॥ २४ ॥

इति हि भिक्षवो मारस्य पापीयसः पुत्रसहस्रम् । तत्र ये मारपुत्रा बोधिसत्त्वेऽभिप्रसन्नाः 10 सार्थवाहपूर्वंगमाः, ते मारस्य दक्षिणे पार्श्वे स्थिता अभूवन् । ये मारपाक्षिकाः, ते वामे पार्श्वे स्थिता अभूवन् मारस्य पापीयसः । तत्र मारः पापीयांस्तान् स्वान् पुत्रानामन्त्रयते स्म — कीदृशेन बलेन वयं बोधिसत्त्वं धर्षयिष्यामः ? तत्र दक्षिणे पार्श्वे सार्थवाहो नाम मारपुत्रः । स पितरं गाथया प्रत्यभाषत् —

सुप्तं प्रबोधयितुमिच्छति पन्नगेन्द्रं
R 388 सुप्तं प्रबोधयितुमिच्छति यो गजेन्द्रम् ।
L 309 15 सुप्तं प्रबोधयितुमिच्छति यो मृगेन्द्रं
सुप्तं प्रबोधयितुमिच्छति सो नरेन्द्रम् ॥ २५ ॥

वामे पार्श्वे दुर्मतिर्नाम मारपुत्रः स एवमाह —

संप्रेक्षणेन हृदयान्यभिसंस्फुटन्ति
लोकेषु सारमहतामपि पादपानाम् ।
20 का शक्तिरस्ति मम दृष्टिहतस्य तस्य
संजीवितुं जगति मृत्युहतस्य वास्तु ॥ २६ ॥

दक्षिणे मधुरनिर्घोषो नामाह —

वृक्षेषु सार क इहास्ति ततो ब्रवीषि
दृष्ट्वा भिनत्मि मनुजेष्वथ का अवस्था ।
25 मेरुं गिरिं यदि भिनत्सि निरीक्षणेन
नैवास्य तुभ्य नयनेभि हतोन्मिषेरन् ॥ २७ ॥

अपि च ।

यः सागरं तरितुमिच्छति वै भुजाभ्यां
तोयं च तस्य पिबितुं मनुजेष्वसन्तु ।
शक्यं भवेदिदमतस्तु[6] वदामि दुःखं
यस्तस्य वक्त्रमभितोऽप्यमलं निरीक्षेत् ॥ २८ ॥

---

१ R भवन्ति for भवेत. २ R सत्त्व° for तत्त्व°. ३ R अबुधः for अबुदेः. ४ R निरीक्ष for निरीक्ष्य. ५ R साधु for शठ. ६ R भवेदिहमतस्तु for भवेदिद°.

वामे शतबाहुर्नामाह — R 389

मेमेह देहेस्मि शतं भुजानां
क्षिपामि चैकेन शतं शराणाम्।
भिनद्मि कायं श्रमणस्य तात
सुखी भव त्वं व्रज मा विलम्ब[1] ॥ २९ ॥ 5

दक्षिणे सुबुद्धिराह —

शतं भुजानां यदि को विशेषो L 310
भुजा किमर्थं न भवन्ति रोमाः।
भुजैकमेकेन तथैव शूलाः[2]
तैश्चापि कुर्यान्न हि तस्य किंचित् ॥ ३० ॥ 10

किं कारणम्?

मैत्रावतस्तस्य[3] मुनेः शरीरे
विषं न शस्त्रं क्रमते न चाग्निः।
क्षिप्तानि शस्त्राणि व्रजन्ति पुष्पतां
मैत्री हि लोकोत्तरभावि तस्य ॥ ३१ ॥ 15

अपि च।

दिवि भुवि च जले च ये बलाढ्याः
असिपरशुधराश्च गुह्यका नरा वा।
क्षमबलमिमु प्राप्य ते नरेन्द्रं
प्रबलबलाल्पबला भवन्ति सर्वे ॥ ३२ ॥ 20 R 390

वामे उग्रतेजा आह —

अन्तर्गतोऽहं धक्ष्यामि प्रविश्यास्य तनुं शुभाम्।
वृक्षं सकोटरं शुष्कं दावाग्निरिव सूक्ष्मतः ॥ ३३ ॥

दक्षिणे सुनेत्र आह —

मेरुं दहेस्त्वं यदि वापि कृत्स्नं 25
प्रविश्य चान्तर्गतु मेदिनीं वा।
दग्धुं न शक्यः स हि वज्रबुद्धिः
त्वत्संनिभैर्वालिकागङ्गतुल्यैः ॥ ३४ ॥

अपि च।

चलेयुर्गिरयः सर्वे क्षयं गच्छेन्महोदधिः।
चन्द्रसूर्यौ पतेद्भूमौ मही च विलयं व्रजेत् ॥ ३५ ॥

---

1 R विलम्बम् for विलम्ब. 2 R शूराः for शूलाः. 3 R मैत्रीवतस्य for मैत्रावतस्तस्य.

लोकस्यार्थे कृतारम्भः प्रतिज्ञाकृतनिश्चयः ।
अप्राप्यैष वरां बोधिं नोत्थास्यति महाद्रुमात् ॥ ३६ ॥

वामे दीर्घबाहुर्गर्वित आह —

आलयं चन्द्रसूर्याणां नक्षत्राणां च सर्वशः ।
पाणिनाहं प्रमर्दामि तवेह भवने स्थितः ॥ ३७ ॥

(L 311) चतुर्भ्यः सागरेभ्यश्च जलं गृह्णामि लीलया ।
तं गृह्य श्रमणं तात सागरस्य परं क्षिपे ॥ ३८ ॥

(R 391) तिष्ठतां तात सेनेयं[1] मा त्वं शोकार्दितो भव ।
सबोधिवृक्षमुत्पाट्य क्षेप्स्ये पाण्या दिशो दश ॥ ३९ ॥

दक्षिणे प्रसादप्रतिलब्ध आह —

सदेवासुरगन्धर्वा ससागरनगां महीम् ।
त्वं मर्दिता[2] प्रकुर्याश्च पाणिभ्यां मदगर्वितः ॥ ४० ॥

त्वद्विधानां सहस्राणि गङ्गावालिकया समाः ।
रोमं तस्य न चालेयुर्[3] बोधिसत्त्वस्य धीमतः ॥ ४१ ॥

वामे भयंकर आह —

भयं हि ते तात भृशं किमर्थं
सेनाय मध्ये किमवस्थितस्य[4] ।
सेना न तस्यास्ति कुतः सहायाः
कस्माद्भयं ते भवतीह तस्मात् ॥ ४२ ॥

दक्षिण एकाग्रमतिराह —

यूथं न लोकेऽस्ति शशीरवीना
न चक्रवर्ती न च केसरीणाम् ।
न बोधिसत्त्वानिह तात यूथं
एकः समर्थो नमुचिं निहन्तुम् ॥ ४३ ॥

वामेऽवतारप्रेक्ष्याह —

न शक्तिशूला न गदा न खङ्गाः
न हस्तिनोऽश्वा न रथा न पत्तिः ।
तं शौण्डमेकं श्रमणं निषण्णं
हन्स्येऽद्य[5] मा संभ्रम तात किंचि ॥ ४४ ॥

---

१ R सैन्येयं for सेनेयं. २ R मर्पिता for मर्दितां. ३ R चाल्येतु for चाल्येयुः. ४ R समवस्थितस्य for किमव°. ५ R हन्येत for हन्स्येऽद्य.

दक्षिणे पुण्यालंकार आह — R 392

नारायणस्य यथ काय अभेद्यमेवो
क्षान्तिबलैः कवचितो दृढवीर्यखड्गः ।
त्रिविमोक्षवाहनसि प्रज्ञधनुः स तात L 312
पुण्यानलेन स हि जेष्यति मारसेनाम् ॥ ४५ ॥ 5

वामेऽनिवर्त्याह —

न निवर्तते तृणगतः प्रदहन् दवाग्निः
क्षिप्तं[1] शरो न च निवर्तति शिक्षितेन[2] ।
वज्रं नभे निपतितं न निवर्तते च
न स्थानमस्ति मम शाक्यसुतं ह्यजित्वा ॥ ४६ ॥ 10

दक्षिणे धर्मकाम आह —

आर्द्रं तृणं प्राप्य निवर्ततेऽग्निः
गिरिकूटमासाद्य निवर्तते शरः ।
वज्रं महीं प्राप्य अधः प्रयाति
अप्राप्य शान्तममृतं न निवर्तते अयम् ॥ ४७ ॥ 15

किं कारणम् ?

शक्य[3] तात अन्तरीक्षे लेख्यचित्रं[4] चित्रितुं
यावन्ति केचि सर्व सत्त्व एकचित्त स्थापितुम् ।
चन्द्रसूर्य मारुतं च शक्य पाश बन्धितुं
न बोधिसत्त्व शक्य तात बोधिमण्ड चालितुम् ॥ ४८ ॥ 20 R 393

वामेऽनुपशान्त आह —

दृष्टीविषेण महता प्रदहामि मेरुं
भस्मीकरोमि सलिलं च महोदधीनाम् ।
बोधिं च पश्य श्रमणं च अहं हि तात
दृष्ट्या[5] यथाद्य उभयं हि करोमि भस्मम् ॥ ४९ ॥ 25

दक्षिणे सिद्धार्थ आह —

विषेण पूर्णो यदि वैष सर्वो L 313
भवेत्त्रिसाहस्रवरः प्रदीप्तः ।
निरीक्षणादेव गुणाकरस्य
सुनिर्विषत्वं विषमप्युपेयात् ॥ ५० ॥

---

१ R क्षिप्तः for क्षिप्तं. २ R निवर्तं विशिक्षितेन for निवर्तति शिक्षि°. ३ R शक्यथु for शक्य. ४ R om. °चित्र. ५ R दृष्ट्व for दृष्ट्या.

विषाणमुग्रं त्रिभवेह यच्च
रागश्च दोषश्च तथैव मोहः।
ते तस्य काये च तथैव चित्ते
नभे यथा पङ्करजो न सन्ति ॥ ५१ ॥

5 * * *

तस्मान्निवर्तामह तात सर्वे ॥ ५२ ॥

R 394 वामे रतिलोलो नामाह —

अहु सूर्यसहस्र प्रवादितैः
अप्सरकोटिसहस्र अलंकृतैः।

10 लोभयित्वेन नेष्यि पुरोत्तमं
कामरतिं हि करोमि वशो तव ॥ ५३ ॥

दक्षिणे धर्मरतिराह —

धर्मरती सद तस्य रतीहा
ध्यानरती अमृतार्थरतिश्च।

15 सत्त्वप्रमोक्षण मैत्ररतिश्च
रागरतिं स रतिं न करोति ॥ ५४ ॥

वामे वातजवो नामाह —

जवेनहं चन्द्ररवी ग्रसेयं
प्रवायमानं गगने च वायुम्।

20 अद्यैव तात श्रमणं गृहीत्वा
प्रासेय मुष्टि विकिरामि वायुम् ॥ ५५ ॥

दक्षिणेऽचलमतिर्नाम मारपुत्रः, स एवमाह —

R 395 यथा तवैषो जववेग उग्रः
तद्यदि स्यात्सुरमानुषाणाम्।

25 सर्वे समग्रापि न ते समर्थाः
कर्तुं रुजामप्रतिपुद्गलस्य ॥ ५६ ॥

वामे ब्रह्ममतिराह —

स्यात्तादृशानामपि वृन्दमुग्रं
कुर्यान्न किंचित्तव मानघातम्।

प्रागेव सैकः प्रकरोति किं ते
वृन्देन साध्यन्ति हि सर्वकार्या ॥ ५७ ॥

---

१ R द्वेषश्च for दोषश्च. २ R °त्समु for °त्वन. ३ R वशवत् for तव. ४ R ग्रहेयं for ग्रसेयं.
५ R वेगस्य for प्रासस्य. ६ R वायुवत् for वायुम्. ७ R °पुंगवस्य for पुद्गलस्य. ८ R सर्वकार्यम्.

दक्षिणे सिंहमतिराह —

न सिंहवृन्दं भुवि दृष्टपूर्वं L 314
दृष्टीविषाणां अपि नास्ति वृन्दम् ।
तेजस्विनां सत्यपराक्रमाणां
पुरुषर्षभाणां अपि नास्ति वृन्दम् ॥ ५८ ॥ 5

वामे सर्वचण्डालो नामाह —

न ते श्रुता तात गिरोऽभिदीप्ता
यथा नदन्ते तनयास्तवेमे ।
वीर्येण वेगेन बलेन युक्ता
व्रजाम शीघ्रं श्रमणं निहन्तुम् ॥ ५९ ॥[1] 10

दक्षिणे सिंहनादी नामाह —

बहवः शृगाला हि वनान्तरेषु
नदन्ति नादान्न सतीह सिंहे ।
ते सिंहनादं तु निशाम्य भीमं
त्रस्ता पलायन्ति दिशो दशासु ॥ ६० ॥ 15 R 396

मारौरसास्तद्वदमी अपण्डिताः
अश्रुत्व नादं पुरुषोत्तमस्य ।
नदन्ति तावत्स्वमताऽतिधृष्टा[2]
मनुष्यसिंहे नदिते न सन्ति ॥ ६१ ॥

वामात्पार्श्वाद्दुश्चिन्तितचिन्त्याह[3] — 20

यच्चिन्तयामि तदिहाशु भोति
कथं न एषो इम वीक्षते च ।
मूढो व एषो अनभिज्ञ किं वा
यदुत्थिहित्वा न पलायते लघुम् ॥ ६२ ॥

दक्षिणात्पार्श्वात्सुचिन्तितार्थो नामाह — 25

मूढो न वायं अपराक्रमो[4] वा
युष्मैव मूढाश्च असंयताश्च ।
न युष्मि जानाथ इमस्य वीर्यं
प्रज्ञाबलेनास्य जिताः स्थ सर्वे ॥ ६३ ॥

मारात्मजानां यथ गङ्गवालिका
एतेन वीर्येण यथैव यूयम् ।

१ R हि हन्तुम् for निहन्तुम्. २ R मतिहृष्टा. ३ R वामपार्श्वे for वामात्पार्श्वात्. ४ R वायम-विधिज्ञमपरा° for वायं अपरा°.

R 397 रोमस्य एकं न समर्थ चालितुं
प्रागेव यश्चिन्तयि घातयिष्ये ॥ ६४ ॥
मा यूयमत्र क्षिणुयात मानसं
प्रसन्नचित्ता भवथा सगौरवाः ।
5 निर्वर्तया मा प्रकरोथ विग्रहं
भविष्यतेऽसौ त्रिभवेस्मि राजा ॥ ६५ ॥

पेयालम् । एवं ते सर्वे मारपुत्राः परिपूर्ण पुत्रसहस्रं शुक्लपाक्षिकाश्च कृष्णपाक्षिकाश्च मारं पापीयांसं पृथक्पृथग्गाथाभिरध्यभाषन्त ॥

L 315 अथ खलु भद्रसेनो नाम मारस्य पापीयसः सेनापतिः, स मारं पापीयसं गाथाभिरध्य-
10 भाषत —

ये ते तवानुयात्राः शक्रो लोकपालाश्च किन्नरगणाश्च ।
असुरेन्द्रा गरुडेन्द्राः कृताञ्जलिपुटाः प्रणत तस्मै ॥ ६६ ॥
किं पुनरनानुयात्रा ब्रह्मा आभास्वराश्च सुरपुत्राः ।
देवाश्च शुद्धावासकास्तेऽपि च सर्वे प्रणत तस्मै ॥ ६७ ॥
15 ये च तवेमे पुत्राः प्रज्ञामेधाविनश्च बलिनश्च ।
R 398 ते बोधिसत्त्वहृदयं अनुप्रविष्टा नमस्यन्ति ॥ ६८ ॥
यापेय मारसेना अशीति स्फुट योजनानि यक्षाद्यैः ।
भूयिष्ठ सर्वप्रेक्षी प्रसन्नमनसो हि निर्दोषम् ॥ ६९ ॥
दृष्ट्वा यथा सुभीमां रौद्रां विकृतां चमूमिमां घोराम् ।
20 न च विस्मितो न चलितो ध्रुवमस्य जयो भवत्यद्य ॥ ७० ॥
स्थित यत्र च सेनेयं तत्र उलूकाः शिवाश्च विरुवन्ति ।
वायसगर्दभरुदितं निवर्तितव्यं क्षमं शीघ्रम् ॥ ७१ ॥
वीक्षस्व बोधिमण्डे पत्ररथा हंस कोकिल मयूराः ।
अभिदक्षिणं करोन्ति ध्रुवमस्य जयो भवत्यद्य ॥ ७२ ॥
25 यत्र स्थित सेनेयं तत्र मसिः पांशवश्च वर्षन्ति ।
महिमण्डि कुसुमवृष्टिः कुरुष्व वचनं निवर्तस्व ॥ ७३ ॥
यत्र स्थित सेनेयं उत्कूलनिकूल शल्यकण्टकाकीर्णम् ।
महिमण्ड कनकनिर्मलु निवर्तितव्यं क्षमं प्राज्ञैः ॥ ७४ ॥
R 399 दृष्टा ति सुपिनि पूर्वं भेष्यसि प्रत्यक्षु यदि न गच्छासि ।
भस्मं चमूं च करिष्यति ऋषिभिर्दग्धा कृता यथा भस्मम् ॥ ७५ ॥

---

१ R निर्वर्तमाना for निवर्तया मा. २ R om. कृष्णपाक्षिकाश्च. ३ R om. गरुडेन्द्राः. ४ R अनुयात्रा for अनानु°. ५ R सुरदेवपुत्राश्च for सुरपुत्राः. ६ R om. देवाश्च. ७ R तवेमे for तवेमे. ८ R विरुवन्ति for विरुवन्ति. ९ R विविधं for °दक्षि°. १० R विद्धं for वीक्षस्व. ११ R तत्र for यत्र.

राजा यतो ऋषिवरो रोपितु आसीत् स ब्रह्मदत्तेन । L 316
उद्गघदण्डकवनं वर्षैर्द्रुमिस्तृण न जाता ॥ ७६ ॥
ये केचि सर्वलोके ऋषयो व्रतचारिणस्तपोयुक्ताः ।
तेषामयं प्रधानो ह्यहिंसकः सर्वभूतानाम् ॥ ७७ ॥
किं ते न श्रुतपूर्वं काये दीप्ता सुलक्षणा यस्य । 5
निष्क्रामति चागारात्स भवति बुद्धो जितक्लेशः ॥ ७८ ॥
इम ईदृशी विभूतिं पूजार्थं निर्मिता जिनसुतेभिः ।
तं नूनमप्रसत्त्वो ह्यमाहुतिसंप्रतिग्राही ॥ ७९ ॥
ऊर्णा यथा सुविमला विराजते क्षेत्रकोटिनियुतेषु ।
जिह्मीकृताः स्म चँ तया निसंशयं एष मारबल्हैन्ता ॥ ८० ॥ 10
मूर्ध्ने यथास्य देवैर्द्रष्टु न शक्यं न वै भवाग्रस्थैः ।
नूनं सर्वज्ञत्वं प्राप्स्यत्यन्यैरनुपदिष्टम् ॥ ८१ ॥ R 400
यथ मेरुचक्रवालाश्चन्द्रासूर्यश्च शक्रब्रह्माणः ।
वृक्षाश्च पर्वतवराः प्रणते सर्वे महीमण्डम् ॥ ८२ ॥
नि:संशयु पुण्यबली प्रज्ञाबलवांश्च ज्ञानबलवांश्च । 15
क्षान्तिबलवांश्च वीर्यबलवानबलंकर्ता नमुचिपक्षा ॥ ८३ ॥
हस्ती यथामभाण्डं प्रमर्दते क्रोष्टुकान् यथा सिंहः ।
खद्योतं वादित्यो भेत्स्यति सुगतस्तथा सेनाम् ॥ ८४ ॥

एतच्छ्रुत्वा परो मारपुत्रोऽतीव रोषात्संरक्तनयनोऽब्रवीत् —

एकस्य वर्णानतिअप्रमेयां 20
प्रभाषसे तस्य त्वमेककस्य ।
एको हि कर्तुं खलु किं समर्थो
महाबला पश्यसि किं न भीमा ॥ ८५ ॥

अथ दक्षिणात्पार्श्वान्मारप्रमर्दको नाम मारपुत्र आह —

सूर्यस्य लोके न सहायकृत्यं 25 L 317
चन्द्रस्य सिंहस्य न चक्रवर्तिनः ।
बोधौ निषण्णस्य च निश्चितस्य R 401
न बोधिसत्त्वस्य सहायकृत्यम् ॥ ८६ ॥

अथ बोधिसत्त्वो मारस्य दुर्बलीकरणहेतोर्विकसितशतपत्रनिभं वदनं संचारयति स्म । यं दृष्ट्वा मारः पापीयान् प्रपलायमानोऽभूत् । मम चमू बोधिसत्त्वस्य वदनं प्रतिष्ठेति

१ R राजायनो for राजा यतो. २ R सुवाच for ऋषयो. ३ R मततपा for च तया. ४ R °बराहन्ता for °बल्हन्ता. ५ R भवग्रस्तैः for भवाग्रस्थैः. ६ R मत्यण्डं for आमभाण्डं. ७ R दक्षिण° for दक्षिणात्. ८ R om. नाम. ९ R च for न. १० R om. पापीयान्. ११ R °पलायमानो for °पलायानो. १२ R प्रविष्ठेति for प्रतिष्ठेति.

मन्यमानः प्रपलानः[1] पुनरेव प्रतिनिवृत्य सपरिवारो विविधानि प्रहरणानि बोधिसत्त्वस्योपर्युत्सृजति स्म सुमेरुमात्रांश्च पर्वतान् । ते च बोधिसत्त्वस्योपरि प्रक्षिप्ताः पुष्पवितानं विमानानि[2] संतिष्ठन्ते स्म । ये च दृष्टिविषा आशीविषाः श्वासविषाश्चाग्निज्वालानुत्सृजन्ति स्म, तच्चाग्निमण्डलं बोधिसत्त्वस्य प्रभामण्डलमिव संतिष्ठते स्म ॥

5 अथ पुनरेव बोधिसत्त्वो दक्षिणेन पाणिना शीर्षं प्रमार्ष्टि स्म । मारश्च पश्यति स्म । बोधिसत्त्वस्य हस्ते खड्ग इति दक्षिणामुखः प्रपलायते स्म । न किंचिदिति पुनरेव प्रतिनिवर्तते स्म । निवृत्य च बोधिसत्त्वस्योपरि नानाविधानि प्रहरणान्युत्सृजति स्म असिधनुशरशक्तितोमरपरश्वधभुशुण्डिमुसलकणयगदाचक्रवज्रमुद्गरपादपशिलापाशायोगुडानतिभयानकान् । ते चोत्क्षिप्तमात्रा नानाविधानि पुष्पदामानि पुष्पवितानानि इव संतिष्ठन्ते स्म । मुक्तकुसुमानि च महीमवकिरन्तो[3] माल्यदामानि चावलम्बमानानि बोधिवृक्षं विभूषयन्ति स्म । तांश्च व्यूहान् विभूतिं दृष्ट्वा बोधिसत्त्वस्य मारः पापीयानीर्ष्यामात्सर्योपहतचेता[4] बोधिसत्त्वमब्रवीत्— उत्तिष्ठोत्तिष्ठ हे राजकुमार, राज्यं भुङ्क्ष्व[5], तावत्तव पुण्यम्, कुतस्ते मोक्षप्राप्तिः ?

अथ बोधिसत्त्वो धीरगम्भीरोदारश्लक्ष्णमधुरया वाचा मारं पापीयसमेतदवोचत्— त्वया तावत्पापीयन्नेकेन निर्गडेन[6] यज्ञेन कामेश्वरत्वं प्राप्तम् । मया त्वनेकानि यज्ञकोटीनियुतशतसहस्राणि निर्गडानि[7] यष्टानि । करचरणनयनोत्तमाङ्गानि च निकृत्य[8] निकृत्यार्थिभ्यो[9] दत्तानि । गृहधनधान्यशयनवसनं चंक्रमोद्यानानि चानेकशो याचनकेभ्यो निसृष्टानि सत्त्वानां मोक्षार्थिना ॥

अथ खलु मारः पापीयान् बोधिसत्त्वं गाथया प्रत्यभाषत्—

यज्ञो मयेष्टस्त्वमिहात्र साक्षी[10]
निरर्गडः पूर्वभवेऽनवद्यः ।
20 तवेह साक्षी न तु कश्चिदस्ति
किंचित्प्रलापेन पराजितस्त्वम् ॥ ८७ ॥

बोधिसत्त्व आह— इयं पापीयन् मम भूतधात्री प्रमाणमिति ॥

अथ बोधिसत्त्वो मारं मारपर्षदं च मैत्रीकरुणापूर्वंगमेन चित्तेन स्फुरित्वा सिंहवदभीतोऽनुत्रस्तोऽस्तम्भी अदीनोऽलीनः असंक्षुभितोऽलुलितो विगतभयलोमहर्षः शङ्खध्वजमीनकलशस्वस्तिकाङ्कुशचक्राङ्कमध्येन जालाविनानावनद्धेन[12] सुरुचिरताम्रनखालंकृतेन मृदुतरुणसुकुमारेणानन्तकल्पापरिमितकुशलमूलसंभारोपचितेन दक्षिणेन पाणिना सर्वकायं परिमार्ज्य सलीलं महीं पराहन्ति स्म । तस्यां च वेलायामिमां गाथामभाषत्—

इयं मही सर्व जगत्प्रतिष्ठा
अपक्षपाता सचराचरे समा ।

1 R प्रपलायमानः for प्रपलानः. 2 R °विमानानि for °विमाने. 3 R विकिरन्तो for अवकिरन्तो. 4 R °मात्सर्यैरुपहत° for °पहतचे°. 5 R मुञ्च for भुङ्क्ष्व. 6 R निरर्गडेन for निर्गडेन. 7 R निरर्गडानि. 8 R om. निकृत्य. 9 R याचकेभ्यो for अर्थिभ्यो. 10 R मया यष्टः for मयेष्टः. 11 R उत्पत्स्ये for अनुत्पन्ने. 12 R जालावनद्धेन for जालवनद्धेन. 13 R सुरुचिरताम्र° for सुरुचिर°.

इयं प्रमाणा मम नास्ति मे मृषा
साक्षित्वमस्मिं मम संप्रयच्छतु ॥ ८८ ॥

संस्पृष्टमात्रा चेयं महापृथिवी बोधिसत्त्वेन षड्विकारमकम्पत् प्राकम्पत् संप्राकम्पत् । अरणत् प्रारणत् संप्रारणत् । तद्यथापि नाम मागधिकानां कांसपात्री काष्ठेनाभ्याहता रणत्यनुरणति, एवमेवेयं महापृथिवी बोधिसत्त्वेन पाणिताडिता रणत्यनुरणति स्म ॥ L 319 5

अथ खलु यस्यां त्रिसाहस्रमहासाहस्रलोकधातौ स्थावरा नाम महापृथिवीदेवता सा कोटिशतपृथिवीदेवतापरिवारा सर्वां महापृथिवीं संप्रकम्प्य नातिदूरे बोधिसत्त्वस्य पृथिवीतलं भित्त्वार्धकायाभ्युन्नाम्य सर्वालंकारप्रतिमण्डिता येन बोधिसत्त्वस्तेनावनतकाया प्राञ्जलीकृता बोधिसत्त्वमेतदवोचत् – एवमेतन्महापुरुष एवमेतत् यथा त्वयाभिहितम् । वयमत्र प्रत्यक्षाः । अपि तु भगवंस्त्वमेव सदेवकस्य लोकस्य परमसाक्षीभूतः प्रमाणभूतश्चेति । एवमुक्त्वा स्थावरा महापृथिवीदेवता मारं पापीयांसमनेकप्रकारं निर्भर्त्स्य बोधिसत्त्वं चाभ्यभिस्तुत्य विविधं च स्वकं प्रभावं संदर्श्य सपरिवारा तत्रैवान्तरधात् ॥ 10

तं श्रुत्य मेदिनिरवं स शठः ससैन्यः R 404
उत्त्रस्त भिन्नहृदयो प्रपलान सर्वे ।
श्रुत्वेव सिंहनदितं हि वने शृगालाः 15
काका व लोष्टुपतने सहसा प्रणष्टाः ॥ ८९ ॥

अथ खलु मारः पापीयान् दुःखितो दुर्मना अनात्तमना अपत्रपमाणरूपो मानाभिभवान्न गच्छति स्म । न निवर्तते स्म । न पलायते स्म । पश्चान्मुखं स्थित्वा उत्तरि सेनामामन्त्रयते स्म – सहिताः समग्रास्तावद्भवन्तस्तिष्ठन्तु मुहूर्तं यावद्वयं ज्ञास्यामो यदि तावच्छक्येतायमनुनयेनोत्थापयितुम् । मा खल्वेवंरूपस्य सत्त्वरत्नस्य सहसा विनाशो भूदिति ॥ 20

अथ खलु मारः पापीयान् स्वा दुहितॄरामन्त्रयते स्म – गच्छध्वं यूयं कन्यकाः, बोधिमण्डमुपसंक्रम्य बोधिसत्त्वस्य जिज्ञासनां कुरुत – किं सरागोऽथ वीतरागः । किं मूढोऽथ प्रेक्षः । किमन्धोऽथ देशज्ञोऽर्थपरायणः । दीनो वा धीरो वेति । इदं खलु वचनं श्रुत्वा ता अप्सरसो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामन् । उपसंक्रम्य बोधिसत्त्वस्य पुरतः स्थित्वा द्वात्रिंशदाकारां स्त्रीमायामुपदर्शयन्ति स्म । तद्यथा । कतमा द्वात्रिंशदाकाराः? काश्चित्तत्रार्धवदनं छादयन्ति स्म । काश्चिदुन्नतान् कठिनान् पयोधरान् दर्शयन्ति स्म । काश्चिदर्धविहसितैर्दन्तावलिं दर्शयन्ति स्म । काश्चिद्बाहूनुत्क्षिप्य विजृम्भमाणाः कक्षान् दर्शयन्ति स्म । काश्चिद्बिम्बफलोपमानोष्ठान् दर्शयन्ति स्म । काश्चिदर्धनिमीलितैर्नयनैर्बोधिसत्त्वं निरीक्षन्ते स्म, दृष्ट्वा च शीघ्रं निमीलयन्ति स्म । काश्चिदर्धप्रावृतान् पयोधरान् दर्शयन्ति स्म । काश्चिच्छिथिल- L 320 25 R 405

१ R प्रमाणं. २ R साक्षी त्वमस्मि for साक्षित्वमस्मि. ३ R कांस्य° for कांस°. ४ R पाणिनाहता for काष्ठेनाभ्याहता. ५ R om. प्रमाणभूतः. ६ R चाभ्यर्च्य for °भ्यभिस्तुत्य. ७ R अन्तर्दधे for अन्तरधात्. ८ R काकेव for काका व. ९ R शक्यतेऽयम् for शक्येतायम्. १० R प्राज्ञः. ११ R क्षयाःपलयितो for अर्थपरायणः. १२ R अच्छाद° for छाद°. १३ R °कक्षं for कक्षान्.

म्बरां समेखलां श्रोणीं दर्शयन्ति स्म। काश्चित्समेखलां तनुदुकूलनिवासितां श्रोणीं दर्शयन्ति स्म। काश्चिज्झणझणाशब्दान्नूपुरैः कुर्वन्ति स्म। काश्चिदेकावलीं स्तनान्तरेषूपदर्शयन्ति स्म। काश्चिद्विनग्नानर्धोरूनुपदर्शयन्ति स्म। काश्चिच्छिरःस्कन्धेषु च पत्रगुप्ताञ्शुकशारिकांश्चोपविष्टानुपदर्शयन्ति स्म। काश्चिदर्धकटाक्षैर्बोधिसत्त्वं निरीक्षन्ते स्म। काश्चित्सुनिवस्ता अपि दुर्निवस्ताः
5 कुर्वन्ति स्म। काश्चिज्जघनरसनाः कम्पयन्ति स्म। काश्चित्संभ्रान्ता इव सविलासमितस्ततश्चंक्रम्यन्ते स्म। काश्चिन्नृत्यन्ति स्म। काश्चिद्गायन्ति स्म। काश्चिद्विलसन्ति स्म, लज्जन्ते च। काश्चित्कदल्य इव वायुविधूता ऊरू कम्पयन्ति स्म। काश्चिद्गम्भीराः स्तनन्ति स्म। काश्चिदंशुकप्रावृताः सघण्टारसना विहस्यन्त्यश्चंक्रम्यन्ते स्म। काश्चिद्वस्त्राण्याभरणानि च पृथिव्यां छोरयन्ति स्म। काश्चिद्गुह्यप्रकाशानि सर्वाभरणान्युपदर्शयन्ति स्म। काश्चिद्गन्धानुलिप्तान् बाहूनुप-
10 दर्शयन्ति स्म। काश्चिद्गन्धानुलेपनकुण्डलान्युपदर्शयन्ति स्म। काश्चिदवगुण्ठिकया वदनानि छादयन्ति स्म, क्षणेक्षणा चोपदर्शयन्ति स्म। काश्चित्पूर्वहसितरमितक्रीडितानि अन्योन्यं स्मारयन्ति स्म। पुनरपि लज्जिता इव तिष्ठन्ति स्म। काश्चित्कुमारीरूपाण्यप्रसूतिरूपाणि मध्यस्त्रीरूपाणि चोपदर्शयन्ति स्म। काश्चित्कामोपहितेन बोधिसत्त्वं निमन्त्रयन्ते स्म। काश्चिन्मुक्तकुसुमैर्बोधिसत्त्वमवकिरन्ति स्म। पुरतश्च स्थित्वा बोधिसत्त्वस्याशयं मीमांसन्ते स्म। वदनं च
15 निरीक्षन्ते स्म—किमयं रक्तेन्द्रियैः पश्यत्याहोस्विद्दूरीकरोति, नयने ईर्यते वा न वेति। ताः पश्यन्ति बोधिसत्त्वस्य वदनं शुद्धं विमलं चन्द्रमण्डलमिव राहुविनिर्मुक्तं सूर्यमिव प्रोदयमानं यूपमिव कनकमयं विकसितमिव सहस्रपत्रं हव्यावसिक्तमिवानलं मेरुमिवाचलं चक्रवालमिवाभ्युद्गतं गुप्तेन्द्रियं नागमिव सुदान्तचित्तम्॥

अथ ता मारदुहितरो भूयस्या मात्रया बोधिसत्त्वस्य संलोभनार्थमिमा गाथा अभाषन्त—

20 सुवसन्तके ऋतुवर आगतके
रमिमो प्रिय पुष्पितपादपके।
तव रूप सुरूप सुशोभनके
वशवर्तिसुलक्षणचित्रितके॥ ९०॥

L 322
वयं जात सुजात सुसंस्थितिकाः
25 सुखकारण देवनराण संभूतिकाः।
उत्थि लघुं परिभुञ्ज सुयौवनिकं
दुर्लभ बोधि निवर्तय मानसकम्॥ ९१॥

R 407
प्रेक्षसि ताव इमा मरुकन्य सुलंकृतिका
तव कारण सज्जित भूषित आगतिका।

(marginal: L 321 at line 7; R 406 at line 11)

१ R सुमेखलां for समे°. २ R तदनुकूल° for तनुदुकूल°. ३ R झणझण° for झणझणा°. ४ R °निवस्त्रा for °निवस्ता ५ R विलसन्ति for विलसन्ति. ६ R कदलिमिव for कदल्य इव. ७ R छारयन्ति for छोर° ८ R क्षणेन for क्षणेक्षणा. ९ R ईर्ष्यते for ईर्यते. १० R सुलोभनार्थम्. ११ R रमिमो. १२ R °चित्रितकाये for °चित्रितके. १३ R वयं for वय. १४ R om सु°.

को रूपमिमं समवेक्ष्य न रज्यति रागरतो
अपि जर्जर काष्ठ व शोषितजीवितको ॥ ९२ ॥

केश मृदू सुरभी वरगन्धिनिका
मकुटाकुण्डलपत्रविशोधितआननिका।
सुललाट सुलेपनआननिका
पद्मविशुद्धविशालसुलोचनिका ॥ ९३ ॥

परिपूरितचन्द्रनिभाननिका
बिम्बसुपक्वनिभाधरिका।
शङ्खकुन्दहिमशुक्लसुदन्तिनिका[1]
प्रेक्ष कान्त रतिलालसिकाम् ॥ ९४ ॥

कठिनपीनपयोधर उद्गतिकां
त्रिवलीकृतमध्यसुसुन्दरिकाम्।
जघनाङ्गणचारुसुविस्तरिकां[2]
प्रेक्षस्व नाथ सुकामिनिकाम् ॥ ९५ ॥

गजभुजसंनिभऊरुणिकां
वलयनिरन्तरबाहनिकाम्।
काञ्चीवरश्रोणिसमण्डितिकां
प्रेक्षहि नाथ इमा तव दासिनिकाम् ॥ ९६ ॥

हंसगतीसुविलम्बितगामिनिकां
मञ्जुमनोज्ञसुमन्मथभाषिणिकाम्।
ईदृशरूपसुभूषिणिकां
दिव्यरतीषु सुपण्डितिकाम् ॥ ९७ ॥

गीतकवादितनृत्यसुशिक्षितिकां
रतिकारणजातिसुरूपिणिकाम्।
यदि नेच्छसि कामसुलालसिकां
सुष्टु सुवञ्चितकोऽसि भृशं खलु लोके ॥ ९८ ॥

निधि दृष्ट यथा[3] हि पलायति को चि नरो
धनसौख्यमजानकु मूढमनो।
त्वमपि तथैव हि रागमजाननको
यः स्वयमागतिकां[4] न हि भुञ्जसि कामिनिकाम् ॥ ९९ ॥ इति ॥

१ L °कुण्ड° for °कुन्द. २ R विस्तुरिका: for सुविस्तरिकां. ३ R यथिको for यथा हि.
४ L आगतेभी for आगतिकां.

अथ खलु भिक्षवो बोधिसत्त्वोऽनिमिषनयन प्रहसितवदन. स्मितमुखोऽविकोपितैरिन्द्रियै-रनभिसंस्कृतैर्गात्रैरजिह्मोऽरक्तोऽदुष्टोऽमूढ. शैलेन्द्रवदप्रकम्प्योऽनवलीनोऽनभिदीनोऽसंपीडित सुसं-स्थितया बुद्ध्या स्वाधीनेन ज्ञानमुखेनात्यन्तसुप्रहीणत्वात्क्लेशाना. श्लक्ष्णया मधुरया वाचा ब्रह्मातिरेकेण घोषेण करविङ्करुतेन स्वरेण वल्गुना मनोज्ञेन ता मारदुहितॄन् गाथाभि प्रत्यभाषत् —

5 कामा भो बहुदु खसचया दु खमूला
ध्यानर्द्धितपसं च भ्रंसनी अबुधानाम् ।
L 324 न स्त्रीकामगुणेभि तृप्तिता विदुमाहु
प्रज्ञातृप्तिकरो भविष्यहं अबुधानाम् ॥ १०० ॥

R 410 कामा सेवयतो विवर्धते पुन तृष्णा
10 पीत्वा वै लवणोदक यथा नर कश्चि ।
नात्मार्थे च परार्थि भोतिहा प्रतिपन्नो
आत्मार्थे च परार्थ उत्सुको भवितहम् ॥ १०१ ॥

फेनाबुद्बुदतुल्यसनिभ तव रूप
मायारङ्गमिवा वियोपित स्वमतेन ।
15 क्रीडा वै सुपिनेव अध्रुवा अपिनित्या
बालाना सद चित्तमोहना अबुधानाम् ॥ १०२ ॥

नेत्रा बुद्बुदतुल्यसादृशा त्वचनद्धा
कठिन शोणितपिण्डमुद्गत यथ गण्डम् ।
उदरो मूत्रपुरीषसचयो असुचोक्ष
20 कर्मक्लेशसमुत्थितो दुखयन्त्र ॥ १०३ ॥

समूढा यहि बालबुद्धयो न तु विज्ञा
शुभतो कल्पयमान आश्रय वितथेन ।
ससारे बहुकाल ससरी दु खमूले
R 411 अनुभोक्ता निरयेषु वेदना बहुदु खा ॥ १०४ ॥

25 श्रोणि प्रस्रवते विगन्धिका प्रतिकूला
उरूजङ्घक्रमाश्च सस्थिता यथ यन्त्रम् ।
भूत युष्मि अहं निरीक्षमी यथ माया
हेतुप्रत्ययत प्रवर्तथा वितथेन ॥ १०५ ॥

---

१ R अनिद्री for अजिह्मो २ R अनाबद्धोनो for अनवलीनो ३ R कलविङ्क॰ for करविङ्क॰
४ R ध्यानाधीनपथ for ध्यानर्द्धितपसं ५ R अरद्धानाम् for अबुधानाम् ६ R तृप्तिभो for तृप्तितां
७ R विदुराहु for विदुमाहु ८ R om अहं ९ R वितथरितथ for वियोपित १० R दृश॰ for त्वच॰
११ R अशुचोक्ष for असुचोक्ष १२ R om. अहं

दृष्ट्वा कामगुणांश्च निर्गुणां गुणहीनां
आर्यज्ञानपथस्य उत्पथां विपथांश्च ।
विषपत्राग्निसमां महोरगां यथ क्रुद्धां
बाला अत्र हि मूर्छिता सुखसंज्ञाः ॥ १०६ ॥ L 325

कामादासु भवीति यो नर प्रमदानां 5
शीले उत्पथि ध्यायि उत्पथि मतिहीनो ।
ज्ञाने सो हि सुदूरि[2] तिष्ठते रतिलोलो
योऽसौ धर्मरतिं जहित्वना रमि कामैः ॥ १०७ ॥

नो रागेण सही वसाम्यहं न च दोषैः R 412
नो नैर्नित्य[3]अशुभअनात्मभिर्वसि सार्धम् । 10
आरातीयरतीयसंवसेन च सार्धं
निर्मुक्तं मम चित्तु मारुतो गगने वा ॥ १०८ ॥

पूर्णं सर्वजगत्त्वमीदृशैर्यदिह स्यात्
कल्पं ताभि सहा समोसृतो[4] विहरेयम् ।
नो वा मह्य खिलं न रज्यना न च मोहो 15
आकाश समतुल्यमानसा जिन भोन्ति ॥ १०९ ॥

यद्यपीह रुधिरास्थिवर्जिताः
देवअप्सर सुनिर्मला शुभाः ।
तेऽपि सर्वि सुमहद्भये स्थिताः
नित्यभावरहिता अशाश्वताः ॥ ११० ॥ 20

अथ खलु ता मारदुहितरः सुशिक्षिताः स्त्रीमायासु भूयस्या मात्रया रागमददर्पं संजनय्य चेष्टामुपदर्श्य गात्राणि विभूषयित्वा स्त्रीमायामुपदर्श्य बोधिसत्त्वं प्रलोभयन्ति स्म ॥

तत्रेदमुच्यते— L 326

तृष्णरती रतिश्च सहिता प्रमद[5]वर मधुरा
मारसमीरिताः सुललिता त्वरितमुपगताः । 25
वायुसमीहिता[6] किसलयास्तरुणतरुलता R 413
नृत्तत[7] लोभयं नृपसुत द्रुमविटपगतम् ॥ १११ ॥

एष वसन्तकालसमयः प्रवर ऋतुवरो
नारिनराण हर्षणकरो निहततमरजः ।

---

१ R विनथा च for विपथांश्च. २ R सुन्दरि for सुदूरि. ३ R नैर्नित्याशुभनात्मभिः for नैर्नित्यअशुचिअनात्मभिः. ४ R समाश्रितो for समोसृतो. ५ R om. °वर. ६ R °समीरिता for समीहिता. ७ R नृत्यत for नृत्तत. ८ R करोति for °करो.

कोकिलहंसमोरैरवित्रिशा द्विजगणकलिलः
 काल उपस्थितोऽनुभवितुं मदनगुणरतिम् ॥ ११२ ॥
कल्पसहस्रशीलनिरतो व्रततपचरितो
 निश्चल शैलराजसदृशास्तरुणरविवपुः ।
5 मेघनिनादवल्गुवचनो मृगपतिनिनदो
 वचनमुवाच सोऽर्थसहितं जगति हितकरः ॥ ११३ ॥
कामविवाद वैर कलहा मरणभयकरा
 बालजनोपसेवित सदा बुधजनरहिता ।
प्राप्तेयु कालु यत्र सुगतैरमृतमधिगतं
10 अद्य भविष्य मारु जिनिया दशबलु अरहान् ॥ ११४ ॥
माय निर्दर्शयन्तिय वदं शृणु कमलमुखा
R 414 राजु भविष्यसेश्वरवरः क्षितिपति बलवान् ।
तूर्यसहस्रसंप्रभणिते प्रमदवरगणे
 किं मुनिवेषकेन भवतो विरम रति भजा ॥ ११५ ॥
L 327 15 बोधिसत्त्व आह –
मेष्यि अहं हि राजु त्रिभवे दिवि भुवि महितो
 ईश्वरु धर्मचक्रचरणो दशबलु बलवान् ।
शैक्ष्यअशैक्ष्यपुत्रनयुतैः सततसमितमभिनतो
 धर्मरती रमिष्यि विषयैर्न रमि रमति मनः ॥ ११६ ॥
20 ता आहुः –
यावच यौवनं न गलितं प्रथमवयधरो
 यावच व्याधि नाक्रमति ते न च जर असितो ।
यावच रूपयौवनधरो वयमपि च सुखी
R 415 ताव नु भुङ्क्ष्व कामरतयः प्रहसितवदनः ॥ ११७ ॥
25 बोधिसत्त्व आह –
यावच दुर्लभोऽद्य लभितः क्षणवर अमृतो
 यावे च वर्जिता क्षणदुखा असुरसुरपुरे ।
यावच जरा च व्याधिमरणं न कुपितरूपं
 तावद्दु भावयिष्यि सुपथं अभयपुरगमम् ॥ ११८ ॥

---

१ R °मयूर° for °मोर°. २ R वद for बुध°. ३ R प्राप्तयु for प्राप्तयु. ४ R निदर्शयन्ति अवदन् for निदर्शयन्तिय वदं ५ R उवाच for आह. ६ R °करणो for °चरणो. ७ शैक्ष्याशैक्ष्य° for शैक्ष्यअशैक्ष्य°. ८ R यावच for याव च. ९ R गुल्लितं for [illegible] गलितं १० R क्रमतेन for नाक्रमति. ११ R असि च for असिता.

ता आहु –

देवपुरम्येऽप्सरवृतस्त्रिदशपतिरिवा
यामसुयामसतुषितके अमरवरस्तुतो ।
मारपुरे च कामरतय प्रमदवशगत
क्रीडयनुभुङ्क्ष्व अस्मभि सहा विपुलरतिकर ॥ ११९ ॥ 5

बोधिसत्त्व आह –

काम तृणोसबिन्दुचपला शरदघनसमा L 328
पन्नगकन्यरोषसदृशा भृशभयकरणा ।
शक्रसुयामदेवतुषिता नमुचिवशगता
कोऽत्र रमेत नार्यभिलषिते व्यसनपरिगते ॥ १२० ॥ 10 R 416

ता आहु –

पुष्पित पश्चिमा तरुवरा तरुणकिसलया
कोकिलजीवजीवकरुता मधुकरविरुता ।
स्निग्धसुनीलकुञ्चितमृदु धरणितलरुहे
किं नरसिंह सेवित वने रमहु युवतिभि ॥ १२१ ॥ 15

बोधिसत्त्व आह –

कालवशात्पुष्पित इमे किसलय तरवो
भुक्षपिपासिता मधुकरा कुसुममभिगता ।
भास्करु शोषयिष्यति यदा धरणितलरुहा
पूर्वजिनोपभुक्तममृत व्यवसितमिह मे ॥ १२२ ॥ 20

मारदुहितर आहु –

प्रेक्षहि तान चन्द्रवदना नवनलिनिनिभा
वाच मनोज्ञ श्लक्ष्ण दशना हिमरजतनिभा ।
ईदृश दुर्लभा सुरपुरे कुत मनुजपुरे
ते त्वय लब्ध ये सुरवरैरभिलषित सदा ॥ १२३ ॥ 25 R 417

बोधिसत्त्व आह –

पश्यमि कायमेध्यमशुचिं कृमिकुलभरित
जर्जरमित्वरं च भिदुर असुखपरिगतम् ।
यत्सचराचरस्य जगत परमसुखकर L 329
तत्पदमच्युत प्रतिलप्स्ये बुधजनमहितम् ॥ १२४ ॥

---

१ R अस्माभिर्महा° for अस्मभि सहा २ R तृणाग्रबिन्दु° for तृणोसबिन्दु° ३ R उवाच for आह
४ R नवनलिनावलिनिभा for नवनलिनि° ५ R इन्धन for इत्वर

ता चतुषष्टिकामलैलितानि[1] चमनुभवियां
नूपुरमेखला अभिहनी विगलितवसना।
कामशराहताः[2] समदनाः प्रहसितवदनाः
किं तव आर्यपुत्र विकृतं यदि[3] न भजसे॥ १२५॥

सर्वभवेषु दोष विदितोऽवचि विधुतरजा
कामसिशक्तिशूलसदृशाः समधुक्षुरसमाः।
सर्पशिरोग्निकर्षुसदृशाः सुविदित इह मे[3]
तेनैहु[4] नारिसंघ त्यजमी गुणहर प्रमदाः॥ १२६॥

ता बहुभिः प्रकारनयुतैः प्रमदगुणकरैः
लोभयितुं न शेकु सुगतं गजकलभगतिम्।
लैज्जिहिरोत्रपात्तु[5] मुनिन प्रपतितु चरणे
गौरवु तुष्ट[6] प्रेम जनिया स्तविषु हितकरम्॥ १२७॥

निर्मलपद्मगर्भसदृशा शारदिशशिमुखा
सर्पिहुतार्चितेजसदृशा कनकगिरिनिभा।
सिध्यतु चिन्तिता ति प्रणिधि भवशतचरिता
स्वामुपतीर्य तारय जगद्व्यसनपारगतम्॥ १२७॥

ता कर्णिकारचम्पकनिभं स्तविय बहुविधं
कृत्व प्रदक्षिणं अतिशयं गिरिरिव अचलम्।
गत्व पितुर्निपत्य शिरसा इदमवचि गिरं
साध्वस नं हि तात प्रतिघं अमरनरगुरोः॥ १२९॥

पश्यति पद्मपत्रनयनः प्रहसितवदनो
नापि सरैकु प्रेक्षति जनं न पि च सभृकुटिः।
मेरु चलेय शुष्य उदधिः शशिरवि प्रपते
नैव स दोषदर्शी त्रिभवे प्रमदवश गमिया॥ १३०॥

अथ खलु मारः पापीयानिदं वचनं श्रुत्वा भूयस्या मात्रया दुःखितो दुर्मना अनात्तमनाः प्रदुष्टमनास्तां स्वदुहितॄनामन्त्रयते स्म – कथं भो न शक्यते स बोधिमण्डादुत्थापयितुम्? मा खलु मूढः अज्ञोऽयं[7] युष्माकं रूपाकृतिं न पश्यति?

अथ खलु ता मारदुहितरः स्वपितरं गाथाभिः प्रत्यभाषन्त –

श्लक्ष्णा मधुरं च भाषते न च रक्तो
गुरु गुह्यं च निरीक्षते न च दुष्टः।

[1] R °कल्पानि for °ललितानि. [2] After st. 125, R reads बोधिसत्त्व आह. [3] R मे से for इह मे. [4] R बहुना for तेन हु. [5] R लज्जिभिरात्तत्र° for लज्जिहिरोत्रपात्तु. [6] R त वस्तु for तुष्टु. [7] R ज्ञाते for अज्ञो.

ईर्यां चर्यां च प्रेक्षते न च मूढः
. काया सर्व पनेति आशयो सुगम्भीरः ॥ १३१ ॥
निःसंशयेन विदिताः पृथु इञ्जिदोषाः
कामैर्विरक्तमनसो न च रागरक्तः । R 420
नैवास्त्यसौ दिवि भुवीह नरः सुरो वा
यस्तस्य चित्तचरितं परिजानयेथा ॥ १३२ ॥
या इञ्जिताय उपदर्शित तत्र तात
प्रविलीयु तस्य हृदयं भवियः सरागः ।
तं दृष्ट एकमपि कम्पितु नास्य चित्तं
शैलेन्द्रराज इव तिष्ठति सोऽप्रकम्प्यः ॥ १३३ ॥ 10
शतपुण्यतेजभरितो गुणतेजपूर्णः L 331
शीले तपस्मि चरितो बहुकल्पकोट्यः ।
ब्रह्मा च देव शुभतेज विशुद्धसत्त्वा
मूर्ध्नी निपत्य चरणेषु नमन्ति तस्मै ॥ १३४ ॥
निःसंशयेन विनिहत्य स मारसेनां 15
पूर्वे जिनानुमत प्राप्स्यति अग्रबोधिम् ।
ताता न रोचति हि नो व रणे विवादे
बल्यस्तु विग्रहु सुकृच्छ्र अयं प्रयोगः ॥ १३५ ॥ R 421
प्रेक्षस्व तात गगने मणिरत्नचूडा
संबोधिसत्त्वनयुताः स्थित गौरवेण । 20
रत्नाकरा कुसुमदामविचित्रिताङ्गा
संप्रेक्षिता दशबलैरिह पूजनार्थम् ॥ १३६ ॥
ये चेतना अपि च ये च अचेतना च
वृक्षाश्च शैल गरुडेन्द्रसुरेन्द्रयक्षाः ।
अभ्योनता अभिमुखा गुणपर्वतस्य 25
श्रेयो भवे प्रतिनिवर्तितुमद्य तात ॥ १३७ ॥

अपि च ।

न तं तरेथस्य न पारमुत्तरे
न तं सैनिधस्य न मूल्यमुद्धरेत् ।

---

१ R ईर्ष्यां for ईर्यां. २ R om. चर्यां. ३ R विमुक्तमनसो for विरक्त°. ४ R प्रचलीयु for प्रविलीयु. ५ R मारसैन्यं for °सेनां. ६ R मनोऽपि रणे for हि नो व रणे. ७ R om. °गरुड°. ८ R अभ्यानता. ९ R तरोदेत् for तं तरेत्. १० R तरसनेद for तं रानेद्.

कुपथस्थितस्त्वं पापीयं मार्गभ्रष्ट इव सार्थिकः ।
दीनैर्हीनस्त्वं पापीयं मत्सरिण इव दरिद्रपुरुषः ॥ १५० ॥ R 424
मुखरस्त्वं पापीयं वायस इव प्रगल्भः ।
मानाभिभूतस्त्वं पापीयं अकृतज्ञ इव दुर्विनीतः ॥ १५१ ॥
पलायिष्यसे त्वमद्य पापीयं क्रोष्टुक इव सिंहनादेन । 5
विधुनिष्यसे त्वमद्य पापीयं वैरम्भवायुविक्षिप्त इव पक्षी ॥ १५२ ॥
अकालज्ञस्त्वं पापीयं पुण्यपरिक्षीण इव भैक्षुकः ।
विवर्जिष्यसे त्वमद्य पापीयं भिन्नभाजनमिव पांशुप्रतिपूर्णम् ॥ १५३ ॥
निगृहीष्यसे त्वमद्य पापीयं बोधिसत्त्वेन मन्त्रेणेवोरगाः ।
सर्वबलप्रहीणोऽसि पापीयं छिन्नकरचरण इवोरुण्डः ॥ १५४ ॥ 10

एवं खलु भिक्षवः शुद्धावासकायिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं दुर्बलमकार्षुः ॥

तत्र भिक्षवो बोधिपरिचारिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं विछन्दयन्ति स्म ।

कतमैः षोडशभिः ? तद्यथा –

अद्य त्वं पापीयं निर्जेष्यसे बोधिसत्त्वेन परसैन्य इव शूरेण ।
निगृहीष्यसे त्वमद्य पापीयं बोधिसत्त्वेन दुर्बलमल्ल इव महामल्लेन ॥ १५५ ॥ 15 L 334
अभिभविष्यसे त्वमद्य पापीयं बोधिसत्त्वेन खद्योतकमिव सूर्यमण्डलेन । R 425
विध्वंसयिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन मुञ्जमुष्टिमिव महामारुतेन ॥ १५६ ॥
वित्रासिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन केसरिणेव शृगालः ।
प्रपातिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन महासाल इव मूलछिन्नम् ॥ १५७ ॥
विलोप्स्यसे त्वमद्य पापीयं बोधिसत्त्वेनामित्रनगरमिव महाराजेन । 20
विशोषिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन गोष्पदवारीव महातपेन ॥ १५८ ॥
पलायिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन वध्यविमुक्त इव धूर्तपुरुषः ।
उद्भ्रामिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन अग्निदाहेनेव मधुकरवृन्दम् ॥ १५९ ॥
रोपिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन राष्ट्रभ्रष्ट इव धर्मराजः ।
ध्यायिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन जीर्णक्रोञ्च इव लूनपक्षः ॥ १६० ॥ 25
विभर्त्स्यसे त्वमद्य पापीयं बोधिसत्त्वेन क्षीणपथ्योदन इवाटवीकान्तारे । L 335 R 426
विलपिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन भिन्नयानपात्र इव महार्णवे ॥ १६१ ॥
आम्लायिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन कल्पदाह इव तृणवनस्पतयः ।
विकिरिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन महावज्रेणेव गिरिकूटम् ॥ १६२ ॥

---

१ R दीनदीनः for °हीनः २ R विधुनिष्यसे for विधुने°. ३ R om. °परि°. ४ R मन्त्रेण चोरगा. ५ R इवा रुण्डः for इवोरुण्ड. ६ विच्छेदयन्ति for विन्छन्दयन्ति ७ R खद्योतमिव for °तक. ८ R विध्वंसिष्यसे. ९ R कुशमुष्टिमिव for मुञ्ज°. १० R बन्धनिर्मुक्त for वध्यविमुक्त ११ R उत्त्रासिष्यसे for उद्भ्रामिष्यसे. १२ R उद्भ्रमिष्यसे for रोपिष्यसे. १३ R विहनिष्यसे. for विभर्त्स्यसे. १४ R °पथ्योदन° for °पथ्यादन°. १५ R अम्ल स्यसे for आम्लायिष्यसे १६ R om °तृण°.

एवं खलु भिक्षवो बोधिपरिचारिका देवपुत्राः षोडशाकारैर्मारं विच्छन्दयन्ति[1] स्म। न च मारः पापीयान् विनिवर्तते स्म॥

तत्रेदमुच्यते —

भूतां चोदन श्रुत्व देवतगणा न निवर्तते सोऽन्तको
उच्छेथा हनथा विलुम्पथ इमां मा दास्यथा जीवितम्।
एषोत्तीर्ण स्वयं ममापि विषयां तारिष्यते चापरां
नान्यं मोक्ष वदेमि किंचि श्रमणे उत्थापयेत्क्रमेत्॥ १६३॥

बोधिसत्त्व आह —

मेरुः पर्वतराज स्थानतु चले सर्वं जगन्नो भवेत्
सर्वे तारकसंघ भूमि प्रपते सज्योतिषेन्दुर्नभात्।
सर्वा सत्त्व करेय एकमतयः शुष्येन्महासागरो
न त्वेव द्रुमराजमूलुपगतश्चाल्येत अस्मद्विधः॥ १६४॥

मार आह —

कामेश्वरोऽस्मि वशिता इह सर्वलोके
देवा सदानवगणा मनुजाश्च तिर्या[2]।
व्याप्ता मया मम वशेन च यान्ति सर्वे
उत्तिष्ठ मह्य विषयस्थ वचं कुरुष्व॥ १६५॥

बोधिसत्त्व आह —

कामेश्वरोऽसि यदि व्यक्तमनीश्वरोऽसि
धर्मेश्वरोऽहमपि पश्यसि तत्त्वतो माम्।
कामेश्वरोऽसि यदि दुर्गति न प्रयासि
प्राप्स्यामि बोधिमवशस्य तु पश्यतस्ते॥ १६६॥

मार आह —

एकाकिनः श्रमण किं प्रकरोषि रण्ये
यं प्रार्थयस्यसुलभः खलु संप्रयोगः।
भृग्वङ्गिरप्रभृतिभिस्तपसो[3] प्रयत्ना
प्राप्त न तत्पदवरं मनुज कुतस्त्वम्॥ १६७॥

बोधिसत्त्व आह —

अज्ञानपूर्वकु तपो ऋषिभिः प्रतप्तो
क्रोधाभिभूतमतिभिर्दिवलोककामैः।

---

१ R विच्छेदयन्ति for विच्छन्द॰. २ R मृ॰ for मृ॰. ३ R तीर्या for तिर्या ४ R [illegible] for [illegible] ५ R त्यागा for तपसो. ६ R प्रयत्नात्.

नित्यं न नित्यमिति चात्मनि संश्रयद्भिः
मोक्षं च देशगमनस्थितमाश्रयद्भिः ॥ १६८ ॥

ते तत्वतोऽर्थरहिताः पुरुषं वदन्ति
व्यापिं प्रदेशगत शाश्वतमाहुरेके ।
मूर्तं[2] न मूर्तमगुणं गुणिनां तथैव
कर्ता न कर्त इति चाप्यपरे ब्रुवन्ति ॥ १६९ ॥ 5 L 337

प्राप्याद्य बोधि विरजामिह चासनस्थः
त्वां जित्व मार विहतं सबलं ससैन्यम् ।
वर्तेष्यि[3] अस्य जगतः प्रभवोद्भवं च
निर्वाण दुःखशमनं तथ शीतिभावम् ॥ १७० ॥ 10

मारः क्रुद्धो दुष्टो रुष्टः परुषगिर पुन तु भणते गृहाण सुगौतमं
एषो ह्येकोऽरण्ये न्यस्तो प्रहिय मम पुरतु भजेया[4] लघुं वशु कुर्वेया[5] ।
शीघ्रं गत्वा मह्यं गेहे हडिनिगडयुगल[6]विकृतं करोथ दुवारिकं
स्वां मे[7] द्रक्ष्ये दुःखेनार्तं बहुविविधजनितरक्षितं मरूण व चेटकम् ॥ १७१ ॥

बोधिसत्त्व आह — 15

शक्याकाशे लेख्यं चित्रं बहुविविधविकृत पदशः प्रकर्तु पृथक्पृथक्
शक्यो वायुः पाशैर्बद्धुं दिशविदिशगमनजवितो नरेण सुयत्नतः ।
शक्या कर्तुं चन्द्रादित्यौ तमतिमिरवितिमिरकरौ नभोऽद्य महीतलं
शक्यो नाहं त्वत्सादृश्यैर्बहुभिरपि गणनविरतैर्द्रुमात्प्रतिचालितुम् ॥ १७२ ॥[10]

अभ्युत्थिता बलवती नमुचेश्चमू सा 20
हाकार[11]शङ्ख[12]रवभेरिमृदङ्गशब्दैः ।
हा पुत्र वत्स दयिता किमसि प्रनष्टो
दृष्ट्वा[13] इमां नमुचिसेनमतीव भीमाम् ॥ १७३ ॥ R 430

जाम्बूनदाकनकचम्पकगर्भगौरा
सुकुमार देवनरसंस्तुत पूजनीय । 25
अद्य प्रयास्यसि विनाशु महारणेऽस्मिं L 338
मारस्य एष्यसि वशं असुरस्य चेन्दुः[14] ॥ १७४ ॥

ब्रह्मस्वरेण करविङ्करुतस्वरेणा
तान् यक्षराक्षसगणां सुगतो बभाषे[15] ।

R 429

१ R नित्यमनित्यं for नित्यं ननित्यम्. २ R मूर्ति न मूर्तिम् for मूर्तं न मूर्तम्. ३ R वर्तिष्येमस्य for वर्तेष्यि अस्य. ४ R व्रजता for भजया. ५ R कुर्वता for कुर्वेया. ६ R चारिमाथा for °युगल°. ७ R चा यें for स्वा मे. ८ R बहुविध° for बहुविविध°. ९ R गणेन for गणन. १० After st. 172, R reads मार आह. ११ R हाहाकार for हाकार°. १२ R om. °रव°. १३ R दृष्ट्वानिमां for दृष्ट्वा इमां. १४ R चन्द्रः for चेन्दुः. १५ R अवभाषसे for बभाषे.

आकाशु त्रासयितुमिच्छति यो ह्यविद्वान्
सोऽस्मद्विधं द्रुमवराद् ग्रहणाय इच्छेत् ॥ १७४ ॥

मित्वा च यो रजु गणेय महासहस्र
लोम्ना च सागरजलं च समुद्धरेयः ।

5 वज्रामयां गिरिवरां विकिरेत्क्षणाच्च
सो चापि मां तरुगतं न विहेठयेते ॥ १७५ ॥

युगमन्तरस्मि स्थित मारु प्रदुष्टचित्तो
निष्कोष पाणिनमसिं प्रगृहीत्व तीक्ष्णम् ।

उत्तिष्ठ शीघ्र श्रमणास्ममतेन गच्छ
R 431 10 मा वेणुयष्टि हरितां व छिनद्मि तेऽद्य ॥ १७६ ॥

बोधिसत्त्व आह –

सर्वेयं त्रिसहस्र मेदिनि यदि मारैः प्रपूर्णा भवेत्
सर्वेषां यथ मेरु पर्वतवरः पाणीषु खड्गो भवेत् ।

ते मह्यं न समर्थ लोम चलितुं प्रागेव मां घातितुं
15 मा दूषी नतिवेल संप्रनदहे स्मारेमि तेऽनद्धम् ॥ १७७ ॥

विध्यन्ति शैलशिखरां ज्वलिताग्निवर्णां
वृक्षां समूलक क्षिपी तथ ताम्रलोहम् ।

L 339 उष्ट्राश्च गोगजमुखास्तथ भैरवाक्षा
आशीविषा भुजग दृष्टिविषाश्च घोराः ॥ १७८ ॥

20 मेघेवे उत्थित चतुर्दिश गर्जमाना
वज्राशनी तथ अयोगुड वर्षमाणा ।

असिशक्तितोमरपरशुं सविषांश्च बाणां
R 432 भिन्दन्ति मेदिनितलं प्रमथन्ति वृक्षां ॥ १७९ ॥

बाहूशतै. शरशतानि क्षिपन्ति केचि
25 आशीविषां हुतवहांश्च मुखौ सृजन्ति ।

मकरादिकांश्च जलजानुदधेर्गृहीत्वा
विध्यन्ति केचि भुजगां गरुडाश्च भूत्वा ॥ १८० ॥

केचित्सुमेरुसदृशानयसा गुडानि
तप्ताग्निवर्णशिखरा निक्षिपन्ति रुष्टाः ।

आसाद्य मेदिनितलं क्षुभयन्ति चोर्वी
हेष्टा परक्रम्य सलिलस्य विलोडयन्ति ॥ १८१ ॥

---

१ R यो for सो. २ विहेठयेय. ३ R पुर्यांषपि हि विभेद्दे स्मा चर्मितेन स्ठे for the line. ४ R मेघाश्च for मेघेव. ५ R धृन्तासि for असिशक्ति. ६ R मुरोमृजन्ति for मुखा सृजन्ति. ७ R शिखराणि क्षिपन्ति for शिखरा निक्षि. ८ R आचक्रम for आसाद्य ९ R बोधि for चोर्वी. १० R परस्न्द for परक्रम्य.

केचित्पतन्ति पुरतस्तथ पृष्ठतोऽस्य
 वामे च दक्षिण पतन्ति अहो ति वत्स । [1]
विपरीतहस्तचरणा ज्वलितोत्तमाङ्गा
 नेत्रेभि निश्चरति विद्युदिव प्रदीप्ता ॥ १८२ ॥
दृष्ट्वा विकारविकृता नमुचेस्तु सेना
 मायाकृतं च यथ प्रेक्षति शुद्धसत्त्वः । (5) (R 433)
नैवात्र मारु न बलं न जगन्न चात्मा [2]
 उदचन्द्ररूपसदृशो भ्रमति त्रिलोकः [3] ॥ १८३ ॥
चक्षुर्न इस्त्रि पुरुषो नपि चात्मनीयं (L 340)
 स्रोतं च घ्राण तथा जिह्व तथैव कायः । (10)
अध्यात्मशून्य बहिशून्य प्रतीत्य जाता
 धर्मा इमे कारकवेदकवीतिवृत्ताः ॥ १८४ ॥
सो सत्यवाक्यमकरोत्सद सत्यवादी
 येनेह सत्यवचनेनिम शून्य धर्माः ।
ये केचि सौम्य विनये अनुकल्पपेक्षाः (15)
 ते शत्रु पाणिषु निरीक्षिषु पुष्पदामां ॥ १८५ ॥
सो दक्षिणे करतले रचिताग्रजाले (R 434)
 ताम्रैर्नखैः सुरुचिरैः सहस्रारचक्रे । [4]
जाम्बूनदार्चिसदृशैः शुभपुण्यजुष्टे
 मूर्धातु पात्र स्पृशते चरणां सलीलम् ॥ १८६ ॥ (20)
बाहुं प्रसार्य यथ विद्युदिवा नभस्था
 आभाषते वसुमतीनिय मह्य साक्षी ।
चित्रो [5] मि यज्ञ नयुतानपि यष्ट पूर्वे
 न मि जातु याचनक वन्ध्यकृता नु दास्ये ॥ १८७ ॥
आपो [6] मि साक्षि तथ तेज तथैव वायु (25)
 ब्रह्मा प्रजापति सजोतिष चन्द्रसूर्याः ।
बुद्धा मि साक्षि दशसु स्थित ये दिशासु
 यथ मह्य शीलव्रतउद्गत बोधिअङ्गाः ॥ १८८ ॥
दानं मि साक्षि तथ शील तथैव क्षान्तिः
 [7]वीर्यापि साक्षि तथ ध्यान तथैव प्रज्ञा ।

---

१ R अहोविवस्त्रा for अहो ति वत्स. २ R मारुनवलं for मारु न बलं. ३ R यक्षाः for °पक्षाः ४ R सह मारचक्रैः for सहस्रारचक्रे. ५ R चित्राणि for चित्रा मि. R न for नु. ६ R आपोऽसि for आपो मि. ७ R वीर्यं च for वीर्यापि.

